# शक्तिवाद-रहस्य-प्रकाशः ॥



काशिराज सभापण्डित

श्रीप्रियनाथ तत्त्वरत्नेन प्रकाशितः ।

वाराणस्यां

अमर यन्त्रालये मुद्रितः ॥

सं० १९५२ ।

श्रीकाशी।

# शक्तिवाद-रहस्य-प्रकाशः ।

प्रकाश्यन्ते रहस्यानि शक्तिवादस्य केनचित् ।
यत्प्रकाशः पुरानासीत् पुरावित्प्रवरादपि ॥१॥

शाब्दे कारणानि यथा; पदपदार्थविषयताशालिवृत्तिज्ञानं, तादृशवृत्तिज्ञानजन्यपदार्थोपस्थितिः, आसत्तिज्ञानं, वक्तृप्रयुक्तवाक्यधर्म्मिकतात्पर्य्यज्ञानं, उचितानुपूर्व्वीकत्वप्रकारकाकाङ्क्षाज्ञानं, योग्यताज्ञानञ्चेति षट्। एवं च जन्यज्ञानमात्रस्यैव द्वित्रिक्षणान्यतरमात्रावस्थायित्वनियमेन शाब्दाव्यवहितप्राक्क्षणे कथं निखिलकारणानां सम्वलनं सम्भवेदितिचेत्। तत्रायं क्रमः, आदौ घटमानयेत्यादिवाक्यानां वक्तृप्रयुक्तानां श्रवणं तदनन्तरं तत्तद्वाक्यघटकपदधर्म्मिकवृत्तिज्ञानं तदनन्तरं तादृशवृत्तिज्ञानजन्यपदार्थस्मरणं, अपेक्षाबुद्धिवत् क्षणत्रयावस्थायि आसत्तिज्ञानरूपं प्रकरणज्ञानात्मकञ्च तदनन्तरं वाक्यश्रवणमूलकं तत्तद्वाक्यधर्म्मिकतात्पर्य्यानुमिति स्तदनन्तरं यथासम्भवं शाब्दबोधोपयोग्याकाङ्क्षानिश्चयात्मको योग्यताया निश्चयः संशयोवैवंरूप औत्सर्गिकः। कदाचित्तात्पर्य्यानुमितेरपि योग्यताकाङ्क्षाज्ञानरूपता सम्भवति। वक्तृप्रयुक्तवाक्यानां श्रवणं कदाचिदपि

शाब्दाव्यवहितप्राक्काले स्थातुं नार्हति अतिव्यवहितत्वा-
त्। वृत्तिज्ञानस्यापि न शाब्दाव्यवहितप्राक्काले स्थिति-
रेव: पदार्थोपस्थित्या तात्पर्य्यानुमित्यावा तस्य नाशावश्य-
कत्वात्, जन्यज्ञानमात्रस्यैव चतु:क्षणस्थायितायाः सर्व्वै-
रेवानङ्गीकारात्, परन्तु स्वजन्यपदार्थोपस्थितिद्वारा तस्य का-
रणत्वमेव, करणत्वस्यच फलाव्यवहितप्राक्क्षणवृत्तिव्यापारा-
व्यवहितप्राक्क्षणावस्थायित्वनिर्वाह्यत्वात्। व्यापारविधया
पदार्थोपस्थितिनिष्ठसाक्षाच्छाब्दकारणत्वस्यावश्यकत्वेन ता-
दृशपदार्थोपस्थितेस्त्रिक्षणावस्थायित्वमवश्यमुपगन्तव्यमन्यथा
तात्पर्य्यानुमित्या तस्या नाशेन शाब्दाव्यवहितप्राक्क्षणाव-
स्थायिता व्याहन्येत। एवंच तात्पर्य्यज्ञाने आकाङ्क्षाया
धर्म्मिविधया नियमतो भानेन व्यर्थं वाक्यज्ञाने स्वातन्त्र्येण
शाब्दकारणत्वकल्पनम् तात्पर्य्यज्ञाननिष्ठकारणतयैवशाब्दोत्प-
त्तेः। यदिचानुमितौ व्याप्तिज्ञाननिष्ठकरणतावत् शाब्द-
बोधे तत्तद्वाक्यधर्म्मिकतात्पर्य्यानुमितिरूप व्यापारद्वारा वा-
क्यज्ञानस्यापि करणत्वं प्राचीनानुमतमेव एककार्य्ये द्वि-
विधकरणतास्वीकारेऽपि क्षतिविरहात् तिलाज्यहोमे तथाद-
र्शनात्। अथवोद्देश्यविधेयवाचकपदवैपरीत्येन वक्तृप्रयुक्त-
वाक्यश्रवणमूलकं यत्र तादृशवाक्यधर्म्मिकमेव तात्पर्य्यज्ञान
मन्यविधवाक्यस्य शाब्दोपयोगिनो वक्तृतात्पर्य्येणाप्रयुक्ततया
तत्रवक्तृतात्पर्य्याविषयत्वेन तज्ज्ञानस्य भ्रमत्वनियमात्। एवं
च निरुक्तवैपरीत्येन प्रयोगस्थले उद्देश्यवाचकपदपूर्व्वक-
त्वेन विधेयवाचकपदप्रतिसन्धानं विना शाब्दस्यानुत्पत्तेः स-
र्व्वसम्मततया शाब्दोपयोगिक्रमिकत्वापन्नवाक्यानुसन्धानमव-
श्यमेवापेक्षणीयं तथापि, घटोघट इत्यादिवाक्यज्ञानानां शा-

ब्दोपयोगित्वं कदाचिदपि न स्वीक्रियते, तादृशसाकाङ्क्ष-
वाक्यज्ञानानां जात्वपि शाब्दजनकत्वस्यासत्त्वात्। तद्वाक्य-
ज्ञानजन्यतावच्छेदकतयाभिमतघटत्वावच्छिन्न विशेष्यतानि-
रूपित तादात्म्यसम्बन्धावच्छिन्न घटत्वावच्छिन्न प्रकारता-
शाल्यन्वयबोधस्यालीकत्वात्। तथाच व्युत्पत्तिवादे तदा-
पत्तिवारणार्थं गदाधरेण कारणान्तरकल्पनं व्यर्थमितिनाश-
ङ्क्यं, यतो घटोघट इत्याद्याकाङ्क्षा ज्ञानजन्यतावच्छेदकको-
टौ घटत्वं न निवेशनीयं लाघवेन सामान्यतस्तादात्म्य-
सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिशाब्दत्वस्यैव
तदाकाङ्क्षाज्ञानजन्यतावच्छेदकत्वोपगमेन चरितार्थतासम्भ-
वात् कालस्यानवधित्वात् पुंसाञ्चासङ्ख्यत्वाद् घटोघट इत्या-
द्याकाङ्क्षाज्ञानतः परिभाषालक्षणाशक्तिभ्रमैर्यथासम्भवं नि-
खिलधर्म्मप्रकारकशाब्दस्य पारमार्थिकत्वात्। एवञ्चतात्प-
र्य्यज्ञानादिरूपापरकारणसमुदायसत्वे घटे घटाभेदबोधवा-
रणार्थमेव कारणान्तरमवश्यमेव स्वीकर्त्तव्यमिति गदाधर
ग्रन्थसङ्गतिः। सर्व्वनाम घटितस्य ससइत्यादिवाक्यस्य ज-
न्यतावच्छेदकत्वं सुतरामेव निरुक्तसामान्यरूपे सूपपन्नं।
एवञ्च सर्व्वनामपदघटितनिरुक्तवाक्याद् घटत्वावच्छिन्ने घ-
टत्वावच्छिन्नान्वयबोधस्य वारणं न स्याद् यदि गदाधरप्र-
दर्शितकारणान्तरस्वीकारो न स्यात्। इत्यास्तामाकाङ्क्षाज्ञा-
नशाब्दयोः कार्य्यकारणभावविचारः॥

कार्य्यान्वितस्वार्थे पदानां शक्तिरितिगुरुमते गदाधरेण
शक्तिवादग्रन्थे वाचकत्वनिर्वचनं कृतं यथा निरूपितत्वां-
शेऽविशेषणीभूय यद्धर्म्मावच्छिन्नविषयतानिष्ठावच्छेदकताक-
जन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं तद्धर्म्मावच्छिन्न-

स्य वाचकत्वं। इत्यञ्च साक्षात्परम्परया कार्य्यताविषयता-निरूपितत्वेन घटत्वाद्यवच्छिन्नविषयतायाः शक्तिज्ञानजन्य-तावच्छेदकत्वेन कार्य्यताविषयतायाः परम्परयाजन्यताव-च्छेदकत्वेऽपि घटपदादेर्न कार्य्यतावाचकत्वप्रसक्तिः। के-वलकार्य्यतात्वावच्छिन्नविषयतात्वेन विधिप्रत्ययशक्तिज्ञान-जन्यतावच्छेदकतया विधिप्रत्ययानां कार्य्यतावाचकत्वं सू-पपन्नं गदाधरनिर्व्वचनस्य पर्य्यवसितार्थस्तु प्रसिद्ध एवात-स्तत् पारिपार्श्वं न लिख्यते। अथ विध्यर्थस्य लौकिकस्थले कार्य्यतारूपतया तत्संग्रहेऽपि अलौकिकविधिप्रत्ययानां का-र्य्यत्वरूपेणापूर्व्वे शक्ततया तत्र वाचकत्वस्य कागतिरिति-चेत्, कार्य्यत्वावच्छिन्नविषयतात्वेनैव तत्तद्विधिप्रत्ययशक्ति-ज्ञानजन्यतावच्छेदकतया गदाधरनिर्व्वचनेनैवालौकिकलि-ङादावपि वाचकत्वस्य सुसिद्धत्वात्।

वृद्धप्रयुक्तेभ्यो घटमानय कलसमानय घटं पश्य प-टमानय वस्त्रमानय पटं पश्य ओदनं पचेत् सूपं भुञ्जीत इत्यादिनिखिलवाक्येभ्यो निखिलवाक्यार्थविषयकशाब्दबोधे-ष्वेव कार्य्यताविषयताघटितघटादिविषयकत्वदर्शनेन शि-शवो हि घटपदादौ साक्षात्परम्परया कार्य्यताविषयतानि-रूपितघटत्वाद्यवच्छिन्नविषयत्वावच्छिन्नकार्य्यतानिरूपित-कारणतावच्छेदकतया घटकलसपदादौ एकां शक्तिं पट-वसनपदादावेकांचशक्तिं कल्पयन्ति। अतएवार्थवादानां वे-दस्वरूपाणामपि कार्य्यताबोधकपदराहित्येन न प्रामाण्य-मिति गुरूणामाशयः। एवंचार्थवादस्थघटादिपदात् शा-ब्दबोधवारणप्रयोजनक एव घटपदादिनिष्ठशक्त्यवच्छिन्नका-रणतानिरूपितकार्य्यतावच्छेदकघटकतया कार्य्यताविषय-

ताप्रवेशः॥ अथ निखिल एव शाब्दबोधे आकाङ्क्षाया आ-
नुपूर्व्वीविशेषेणैव शाब्दोपयोगितायाः वक्तव्यत्वेन कार्य्यता-
बोधकपदरहितवाक्यस्य शाब्दोपयोगितायाः अम् घट लिङ्
इत्यादिवाक्यस्येवानङ्गीकारेणार्थवादानां शाब्दोपयोगितावा-
रणस्य सहजत एव सम्भवेन शक्तिमत्पदजन्यतावच्छेदक-
शरीरे कार्य्यताविषयतानिरूपितत्वनिवेशनं व्यर्थमेवाका-
ङ्क्षाविशेषज्ञानस्यशक्तिज्ञानसहकारितायाः भवतापि वक्तव्यत्वा-
त्। अन्यथा यागः कार्य्यः घटोऽस्तीत्यादौ कार्य्यत्वविष-
यतानिरूपितघटत्वावच्छिन्नविषयताशालिशाब्दस्य कथमपि
वारणं नस्यात्। नच यत्पदज्ञानजन्यबोधसामान्ये यदर्थ-
विषयतानिरूपितयदर्थविषयताशालित्वं दृश्यते ऽन्वयव्यति-
रेकतस्तदर्थविषयतानिरूपिततदर्थविषयतात्वेन तत्पदजन्य-
तावच्छेदकत्वनियमस्तत्रच गौरवमकिञ्चित्करं कार्य्यकार-
णभावकल्पने ऽन्वयव्यतिरेकज्ञानस्यैवोपयोगित्वादेवञ्च घटा-
दिपदजन्यशाब्दबोधे नियमतः कार्य्यताविषयतानिरूपितघ-
टादिविषयताकत्वदर्शनेन कार्य्यताविषयतानिरूपितत्वं नि-
रुक्तजन्यतावच्छेदककोटावायातमितिवाच्यम्, तथासति घ-
टादिपदजन्यबोधसामान्य एवान्वयविषयतानिरूपितघटा-
दिविषयतायाः दृष्टत्वेनान्वयविषयतानिरूपितत्वेन घटादि-
विषयतायाः शक्तिज्ञानजन्यतावच्छेदकत्वस्वीकारावश्यकत्वे-
न गदाधरेणान्विताभिधानवादिमतदूषणस्यासङ्गत्यापत्तेः।
व्यभिचारावारकविशेषणान्तरघटिते व्याप्यतापर्य्यवसितका-
र्य्यतावच्छेदकतायाः अप्रामाणिकत्वाच्च केवलघटत्वावच्छि-
न्नविषयतात्वेन शक्तिज्ञानजन्यतावच्छेदकत्वसम्भवात् ताव-
तैव पदज्ञानशाब्दयोरव्यभिचारनिर्वाहादतएव सव्यभिचा-

रयग्रन्थे कोश्यु पस्थित्यव्यवहितोत्तरत्वे संशयनिष्ठजन्यताया अ-
वच्छेदकत्वं व्यवस्थाप्य संशयत्वे जन्यतावच्छेदकत्वं निरा-
कृतं गदाधरेण । नच कार्य्यताविषयतानिरूपितघटविषय-
त्वावच्छिन्नशाब्दानुत्पादप्रयोजकत्वं सामान्यतो घटपदाभा-
व एव लाघवेन कल्प्यते नतु घटपदघटितानां कार्य्यता-
बोधकपदघटितानांच विविधानुपूर्व्वीणामभावकूटे गौरवा-
त् । एवञ्च यादृशधर्म्मावच्छिन्नकार्य्यस्यानुत्पत्तिप्रयोजकत्वं
यादृशरूपावच्छिन्नस्याभावे वर्त्तते तादृशरूपावच्छिन्ने ता-
दृशधर्म्मविशिष्टनिरूपितकारणत्वं सर्व्वानुमतमेव, कार्य्यता-
वच्छेदकावच्छिन्नानुत्पत्तिप्रयोजकाभावप्रतियोगिताया एव
कारणतारूपत्वादितिवाच्यम् । एवं सत्यन्वयविषयतानिरू-
पितघटविषयताशालिबुद्धित्वावच्छिन्नानुत्पादप्रयोजकत्वं घ-
टपदज्ञानाभावे प्रकल्प्य घटपदज्ञाने अन्वयविषयतानिरू
पितघटविषयताशालिशाब्दत्वावच्छिन्नजनकताया वारणस्य
गीर्व्वाणगुरूणामप्यशक्यत्वात् । नच प्रतिवन्धिर्न पदार्थमु-
पपादयितुं प्रभवेत् तस्य प्रमाणानन्तर्गतत्वादतएव प्रति-
वन्धेरनुत्तरत्वमिति ग्रन्थकारलिखनं दृश्यते, एवञ्च कार्य्य-
ताविषयतानिरूपितत्वापन्नघटत्वावच्छिन्नविषयताविशिष्ट -
शाब्दानुत्पत्तिप्रयोजकतायां लाघवेन घटपदज्ञानाभावे सि-
द्धायां घटपदज्ञाने ऽकामेनापि कार्य्यताविषयताघटितध-
र्म्मावच्छिन्नं प्रति कारणत्वमङ्गीकर्त्तव्य मन्यथा कार्य्यका-
रणभावमात्रस्यैवोच्छेदः स्यात् । स्वाभिमतयथाकथञ्चिद्रू-
पावच्छिन्नानुत्पत्तिप्रयोजकताया यथाकथञ्चिद्धर्म्मावच्छिन्ना-
भावे स्वीकारेणैव चरितार्थत्वसम्भवादिति वाच्यं, अतिप्र-
सङ्गाद्यनापादकलघुधर्म्मावच्छिन्नं प्रत्येव स्वावच्छिन्नानुत्प-

त्तिप्रयोजकाभावप्रतियोगित्वरूपं कारणत्वं सर्व्वसम्मतम् । कार्य्यत्वमपि तादृशलघुधर्म्मावच्छिन्नमेव, ईदृशकार्य्यतावच्छेदकावच्छिन्नानुत्पत्तिप्रयोजक एव तत्कार्य्यतावच्छेदकस्य व्याप्यधर्म्मावच्छिन्नानुत्पत्तिप्रयोजकतायाः क्लृप्तत्वं, एवञ्च घटत्वावच्छिन्नविषयतामात्रेण घटपदज्ञानजन्यतास्वीकारेऽपि घटत्वावच्छिन्नविषयताविशिष्टशाब्दत्वावच्छिन्नानुत्पादप्रयोजके घटपदज्ञानाभावे घटत्वावच्छिन्नविषयताव्याप्योभूता कार्य्यताविषयतानिरूपितत्वसहिता या घटत्वावच्छिन्नविषयता तस्यां जन्यतावच्छेदकतापर्य्याप्त्यसत्त्वेऽपि तादृशविशिष्टविषयतावच्छाब्दानुत्पत्तिप्रयोजकताया अक्षतत्वात् । एवं नियमास्वीकारे प्रमेयत्वादिविशिष्टस्य प्रत्यक्षानुमित्युपमितिभिन्नत्वादिविशिष्टस्य वा घटत्वावच्छिन्नविषयताशालिज्ञानस्यानुत्पत्तिप्रयोजकताया घटपदज्ञानाभावे आवश्यकत्वेन तत्तद्धर्म्मघटितघटत्वावच्छिन्नविषयत्वमपि कार्य्यतावच्छेदकं स्यात्, तस्मात् कार्य्यतावच्छेदकव्याप्यधर्म्मस्यातिप्रसङ्गाद्यनापादकस्यार्थसमाजग्रस्ततया न कार्य्यतावच्छेदकत्वमतएव निश्चयत्वादिकमर्थसमाजग्रस्ततया न कस्यापि जन्यतावच्छेदकमिति दीधितिकृता बहुशोलिखितम् । अर्थसमाजग्रस्तत्वं तत्तद्गुरुधर्म्मव्यापकीभूतानां लघुधर्म्माणां क्लृप्तप्रयोजकेभ्य एव निर्वाह्यत्वम । इत्यञ्च शक्तिज्ञानजन्यतावच्छेदकशरीरे कार्य्यत्वविषयतानिवेशनं व्यर्थमेवेति चेन्न यतोमीमांसकाः फलदर्शनेन फलसमानाधिकरणे फलाव्यवहितपूर्व्ववर्त्तिनि अन्यथासिद्धिशून्यत्वेन सकलसम्प्रदायस्वीकृते जनकतानिर्व्वाहार्थं कार्य्यकारणभावे व्यभिचारवारणार्थञ्च जनकतावच्छेदकतया शक्तिं कल्पयन्ति तै-

रव्यवहितोत्तरत्वे संसर्गतया वन्हिव्याप्यतावत्त्वादिजातेश्चानभ्युपगमात्। अतएव चान्द्रायणादिव्रतगङ्गास्नानादौ पापनाशकारणत्वस्य प्रकृतसाध्यकनिखिलपरामर्शेषु प्रकृतसाध्यकानुमितिकारणत्वस्य मण्यरण्यादिषु वन्हिकारणत्वस्य च सुनिर्व्वाहः। एकजातीयफलजनकेषु सर्व्वेष्वेकशक्तेरेव स्वीकारात् तस्याः फलमात्रोन्नेयत्वात्। शक्तिश्चाव्याप्यवृत्तिरत्यन्ताभाववन्नित्यैवातः शक्त्युत्पादार्थं न कारणान्तरापेक्षा। अतएवावस्थितवन्हावपि मणिविशेषयोगे उत्तेजकाद्यनङ्गीकृन्मीमांसकमते दाहाद्यनुत्पत्तिनिर्व्वाहस्तदानीं तत्तद्वन्हौ शक्तिमत्त्वास्वीकारात्। एतेन वन्हिगतवैजात्यस्य कारणविशेषनिरूपितजन्यतावच्छेदकत्वानभ्युपगमे फुत्कारघर्षणादीनां सहकारित्वनियमोनस्यात् घर्षणासत्त्वे फुत्कारसत्त्वे ऽरणिमणितो दहनानुत्पादेन सिद्धिदशायामेकलिङ्गकपरामर्षकाले ऽन्यलिङ्गकेच्छयाऽनुमित्यनुत्पादेनचेष्टापत्तेरयोगादितिपरास्तं, तत्समये तत्रतत्र शक्तिसम्बन्धस्यास्वीकारात् शक्तिसम्बन्धस्य फलमात्रोन्नेयत्वादेतेन भ्रमानङ्गीकृन्मते ऽभावमात्रस्यैवाजनकत्वनियमेन प्रतिबध्यप्रतिबन्धकभावो नास्तीति समाहितम्, प्रतिबन्धककाले ऽपरकारणेषु शक्तिकुण्ठनस्वीकारेणैव चरितार्थत्वात्। एवञ्च घटकलसादिपदेषु समानार्थकेष्वेक शक्तिरेव स्वीकार्य्या, न तु नैयायिकमत इव एतन्मते ऽर्थैक्ये पि पदवैलक्षण्यनिबन्धनशक्तिवैलक्षण्यम्। एवं चार्थवादस्य फलाजनकत्वेन तद्घटकपदेषु शक्तिर्नस्वीक्रियते मणिसमवहितवन्हिवत्। लाक्षणिकपदेष्वेवम्। सर्व्वत्रशक्तिसिद्धौ फलजनकत्वमेव लिङ्गं स्वरूपयोग्यत्वरूपं जनकत्वं मीमांसका नाङ्गीकुर्व्वन्ति। अ-

रण्डस्थदण्डादौ कारणत्वस्वीकारस्यानावश्यकत्वेन तत्र तदानीं शक्तिसम्बन्धस्यानङ्गीकारात्। घटाद्युत्पादोपयोगित्वज्ञानेन तदानयनप्रवृत्तेश्च तदुत्पादोपयोगितया मृद्वद्दण्डोपयोगिरासभाद्यानयनप्रवृत्तिवत् कथञ्चिदुपपादनीयत्वात्। एवञ्च सृष्टिप्रथमे शुक्रशोणिताद्यसद्भावेऽपि शरीरोत्पत्तिनिर्व्वाहः।

गुरवोहि यादृशकारणत्वे सति स्वाभावरूपलिङ्गेनार्थवादघटकपदेषु शक्तिविरहं कल्पयितु मीशते तन्मते तादृशकारणत्वमावश्यकं, तच्च कार्य्यताविषयत्वनिरूपितत्वेन तत्तद्धर्म्मावच्छिन्नविषयतानिष्ठावच्छेदताकजन्यतानिरूपितजनकत्वरूपम्। अवच्छेदकशरीरे कार्य्यताविषयतानिरूपितत्वानिवेशे आर्थवादिकपदेषु ज्ञानशक्तिवादिना सह गुरुणा शुद्धघटत्वावच्छिन्नविषयत्वावच्छिन्नजनकत्वस्य विप्रतिपत्तिविषयत्वेन मध्यस्थस्य तत्र संशयोजायते तत्संशयमूलकस्य कार्य्यताविषयतानिरूपितत्वाघटितहेतोरभावे गुरुसम्मतशक्तेर्व्यभिचारसंशयोऽवश्यं भवेदतस्तद्धेतुनार्थबादिकपदेषु गुरुसम्मतशक्तिविरहोन सेद्धुमर्हति, गुरूक्तहेतुश्च मतद्वय एवार्थबादिकपदेषु निश्चित एवातोन तत्र विप्रतिपत्तिसम्भवः। नचार्यवादिकपदेषु कार्य्यताविषयताघटितनिरुक्तजनकत्वाभावरूपहेतुनिश्चयेऽपि तत्र शक्तिसन्देहेन तन्मूलकव्यभिचारसंशयतादवस्थ्यमिति वाच्यम्, साध्याभावांशे निश्चयरूपं शेषांशे संशयसाधारणं व्यभिचारज्ञानं व्याप्तिनिश्चयविरोधीति मीमांसकमतस्य माधारणग्रन्थे दीधितिकृता दर्शितत्वाद् गदाधरेण स्फुटीकृतत्वाच्च। नच गुरुकल्पितहेतुर्नोभयवादिसम्मतः ज्ञानशक्तिवादिमते कार्य्यताविषयता-

निरूपितत्वस्य कस्यापि जन्यताया अवच्छेदकगर्भाप्रविष्टत्वा-
दितिवाच्यं । अवच्छेदकतावच्छेदकसाधारणावच्छेदकता-
याः प्रामाणिकतया कार्य्यताविषयतानिरूपितत्वनिष्ठावच्छे-
दकताकत्वा सती घटत्वाद्यवच्छिन्नविषयतानिष्ठावच्छेदक-
ताका या जन्यता तस्या ज्ञानशक्तिवादिमतेऽपि विधिप्रत्यय-
घटिताकाङ्क्षादिमत्तत्तत्पदज्ञाननिष्ठजनकतानिरूपितत्वेन प्र-
सिद्धतयोभयवादिसिद्धत्वात्तैः । नच विविधानुपूर्व्वीघटि-
ताकाङ्क्षाणां कारणत्वस्वीकारावश्यकतया विधिप्रत्ययघटित-
तादृशाकाङ्क्षाभेदकूटरूपलिङ्गेनैवार्थवादिकपदेषु शक्त्यभावः
साध्यतां गुरुमते किमुक्तकार्य्यकारणभावकल्पनेनेति वाच्यं ।
अव्यवहितोत्तरत्वस्य मीमांसकमते संसर्गतायाः अप्रामाणि-
कतयाऽऽकाङ्क्षाया व्यक्तिविश्रान्तिरेव पर्य्यवसिताऽतस्तत्तदा-
काङ्क्षाभेदकूटस्य युगसहस्रेण ज्ञातुमशक्यत्वेन तत्र व्याप्तिः
निश्चयस्य दुर्भिक्षतापातात् । नच ज्ञानशक्तिवादिमते उ-
क्तहेतोर्यादृशरीत्या प्रसिद्धिः क्रियते गुरुमतेऽपि तादृशरी-
त्यैव प्रसिद्धिरास्तां किं कारणताविशेषं प्रकल्प्य तदवच्-
छेदकतया घटादिपदमात्रे शक्तिसिद्धिरितिवाच्यम् । ईदृश
सूक्ष्मविवेचनया तन्मतखण्डनस्येदानीमनावश्यकत्वाद् गु-
र्व्वादिमतोपर्य्युक्तदोषस्य शक्तिवादे गदाधरेणदत्तत्वाद् यथा
तत्र गदाधरलिखनं, तत्तद्विषयकशाब्दं प्रति शक्तिविशेष-
पुरस्कारेण तत्तद्वाचकपदस्य तज्ज्ञानस्य वा न हेतुत्वस-
म्भवः । विशिष्य तत्तत्पदार्थान्वितततत्पदार्थबोधे तत्तत्प-
दसाकाङ्क्षतत्तत्पदज्ञानत्वेनावश्यं क्लृप्तकारणतयैवोपपत्तावी-
दृशकार्य्यकारणभावस्यनिर्युक्तिकत्वादिति । एवञ्च शुद्धघट-
त्वाद्यवच्छिन्नविषयत्वावच्छिन्नजन्यतानिरूपितजनकताव -

च्छेदकतया शक्तेरसिद्धत्वे व्यवस्थापिते किं पुनः कार्य्यताविषयतानिरूपितत्वघटितघटत्वावच्छिन्नविषयत्वावच्छिन्नजनकत्वान्तरसिद्धेर्दार्य्यार्थं प्रमाणानुसन्धानेन। अथ वृत्तिज्ञानजीन्यपदार्थोपस्थितौ शाब्दकारणत्वस्य सर्व्वसम्मततया निरुक्तशक्तिकल्पनायां युक्त्यन्तरासत्त्वेऽपि वाचकताया अन्यथानुपपत्तिरूपयुक्त्यैव न्यायमते गुरुशरीरभागवतेच्छाया इव तस्याः सिद्धिरप्रत्यूहैवेतिचेन्न, वाच्यवाचकभावे वृत्तित्वनिर्वाहार्थं वरं तस्य स्वरूपसम्बन्धरूपपदार्थान्तरताया एव न्याय्यत्वात्, किं पुनरप्रामाणिकनिरुक्तकार्य्यकारणभावं स्वीकृत्य शक्तेः पदार्थान्तरत्वं प्रकल्प्यच गुरुशरीरवाचकत्वज्ञानत्वेन शाब्दकारणतास्वीकरणेनेति। अथैवं न्यायमतेऽपि विशिष्टभगवदिच्छाविषयतास्वत्, प्रवहुनिरूप्यनिरूपकभावकल्पनापेक्षया तादृशगुरुरूपेण वृत्तिज्ञाने करणताकल्पनापेक्षया च वाच्यवाचकभावस्य स्वरूपसम्बन्धविशेषरूपतैव साधीयसी स्यादितिचेन्न, शाब्दोपयोगितायामीच्छांशे ईश्वरीयत्वमनिवेश्य शक्तिपरिभाषयोर्ज्ञानस्य लाघवादेकरूपेणैककरणतानिर्वाहार्थं गुरुशरीराया अपि भगवदिच्छायाः कल्पनस्य तद्विषयतासु बहुनिरूप्यनिरूपकभावकल्पनस्यचावश्यकत्वात्। वाच्यवाचकभावस्य तदतिरिक्तत्वेतु परिभाषावाचकत्वयोर्नियमतो द्विविधकारणत्वापत्त्या गौरवं स्यादित्यास्तां विस्तरः॥

इदमत्रावधेयम्, मीमांसकगुरोरभिप्रायो यथातथाऽस्तु परन्तु शक्तिवादग्रन्थकृद्गदाधरः स्वकीयबुद्धिमवलम्ब्य कार्य्यान्वितस्वार्थे पदानां शक्तिरितिमीमांसकवाक्यस्य पर्य्यवसितार्थमवधारितवान् यथा निरूपितत्वांशेऽविशेषणीभू-

य यद्रूपावच्छिन्न विषयतानिष्ठावच्छेदकताक जन्यतानिरूपितजनकतावच्छेदकशक्तिमत्त्वं तद्रूपावच्छिन्नवाचकत्वमित्थं रीत्या शक्तिनिर्वचनेन विधिप्रत्ययरहितवाक्यानां शाब्दाजनकत्वमितिगुरुसिद्धान्तस्य निर्वाहः कृत. । तन्नसमीचीनं गुरुमते उक्तरीत्या शक्तिनिर्वचने कार्य्यं वर्त्तते तद्यावदेव सकारणकमित्यादि सर्व्वनामघटितार्थवादस्यतत्पदानां शाब्दजनकतावच्छेदकशक्तिमत्त्वं दुर्व्वारमेव, तद्वाक्यघटकतत्पदस्य वक्तृबुद्धिस्थकार्य्यत्वावच्छिन्नबोधपरत्वेन लिङादिपदवत् कार्य्यतावच्छिन्न विषयता शालिबोधजनकत्वाविशेषात् । अथ विध्यर्थवाचिसर्व्वनामपदघटितार्थवादानामपि प्रामाण्यमिष्टमेव तद्वाक्यार्थज्ञानादपि कियदंशे प्रवृत्तिनिर्व्वाहादप्रवर्त्तकवाक्यानां शाब्दाजनकत्वमितिगुरोः सिद्धान्तादितिचेदेवमपि महर्षिकार्य्यहोमस्थानमासीत् तेन तुल्यं स्थानमयं कृतवानित्यादिवाक्यस्थतत्पदस्य महर्षिकार्य्यत्वघटितस्थानत्वावच्छिन्नवाचकताया आवश्यकत्वेन निरूपितत्वांशे ऽविशेषणीभूयेत्यादिरीत्या गदाधरकृतशक्तिनिर्वचनस्य सम्भवितुमनर्हत्वात् । नच तत्र तत्पदं कार्य्यत्वान्तं विहायापरधर्म्मप्रकारकबुद्ध्यैव वक्त्राप्रयुक्तमिति नोक्तरीत्या शक्तिनिर्व्वचनविरोध इतिवाच्यं, यतो भवत्कृतशक्तिनिर्व्वचनानुपपत्तिर्हि वक्तृबुद्धिमपाकर्त्तुं न प्रभवेद् वक्तुर्निखिलधर्म्मप्रकारकबुद्धेर्जनितु मर्हत्वात्, तादृशबुद्ध्या सर्व्वनामप्रयोगसम्भवाच्च । अत्र केचित् सर्व्वनामपदानां वक्तृबुद्धिप्रकारत्वोपलक्षित धर्म्मावच्छिन्नेषु शक्तिं स्वीकुर्व्वतां मताश्रयणे भवतु निरुक्तदोषः परन्तु दीधितिकारमत इव गुरुमते ऽपि वक्तृबुद्धिप्रकारत्वघटितधर्म्मावच्छिन्ने

ष्वेवशक्तिः स्वीक्रियते, घटोऽस्ति तमानयेत्यादौ प्रकारत्वेनैव घटत्वादिकं शाब्देऽपि भासतामित्येव स्वीकार्य्यम्, तमानयेत्यादिवाक्यजन्यबोधोत्तरं कर्म्मत्वं घटीयं नवेत्यादिसंशयनिवृत्तिस्तु समानविषयकज्ञानत्वेनैव प्रतिबध्यप्रतिबन्धकभावो नतु समानप्रकारताकत्वमपि तत्रोपयोगीतिमतमाश्रित्य निर्वाह्यते, एतन्मते घटाभाववत्ताबुद्धिं प्रत्यपि द्रव्यत्वरूपसामान्यधर्म्मेणापि घटवत्तानिश्चये प्रतिबन्धकत्वमिष्टमेव। अथवा निरुक्तशाब्दबोधानन्तरं कथञ्चित् कार्य्यताधर्म्मिकं स्वरूपतो घटत्वप्रकारेण मानसं स्वीकृत्योक्तसंशयनिवृत्तिः सम्पादनीया। वस्तुतस्तु गुरुमते भ्रमस्यालीकतया संशयादेरसत्त्वेन प्रतिबध्यप्रतिबन्धकभावस्यैवालीकत्वादेवमभावस्य तुच्छत्वेन कार्य्यजनने सामर्थ्याभावान्नितरामेव प्रतिबध्यप्रतिबन्धकभावस्य तन्मतेऽलीकता। नच भावो यथातथा ऽभावः कारणं कार्य्यवन्मत इति कुसुमाञ्जलिकारिकया ध्वंसरूपाभावे कार्य्यत्वं दृष्टान्तीकृत्य प्रतिबन्धकाभावेऽपि कारणत्वं व्यवस्थापितमिति वाच्यम् तन्मतेऽतिरिक्तध्वंसस्यैवालीकतया दृष्टान्तस्याकाशकुसुमसमत्वादतः किंभयेन निरुक्तप्रकारत्वोपलक्षितधर्म्मावच्छिन्नेषु सर्व्वनामपदशक्तिः स्वीक्रियते, वक्तृबुद्धिस्थत्वविशिष्टेषु शक्तिस्वीकारे दोषलेशस्याप्यसत्त्वादित्याहुः। परेतु गुरुमते भ्रमासत्त्वेन सर्व्वनामपदनिष्ठशक्तिज्ञानजन्यतावच्छेदकत्वं बुद्धिस्थसमुदायपर्य्याप्तावच्छेदकताकविषयत्वेनैव कल्पनीयं लाघवान्नतु बुद्धिस्थान्तर्गतनिष्ठपरस्परोपश्लेषावगाहित्वेन गौरवादेवञ्चोक्तमहर्षिकार्य्यत्वस्य तदादिपदजन्यशाब्दविषयत्वेऽपि न तादृशकार्य्यत्वविषयतानिरूपितत्वेन तत्पदशक्ति-

ज्ञानजन्यतावच्छेदकत्वं, अपितु कार्य्यत्वघटितसमुदायप-र्य्याप्तावच्छेदकताकविषयतात्वेनैव, अतो न सर्व्वनामपद-घटितोक्तार्थवादानां प्रामाण्यं, कार्य्यताविषयतानिरूपित-त्वघटितविषयतात्वेन जन्यतावच्छेदकताया असत्त्वादतएव कार्य्यत्वघटितधर्म्मावच्छिन्नवाचकसर्व्वनामपदघटितवाक्ये-ऽपि विधिप्रत्ययप्रक्षेप आवश्यक एव। नच घटादिपदश-क्तिज्ञानजन्यतावच्छेदकत्वमपि कार्य्यो घट इत्यादिसर्व्वत्रैव कार्य्यत्वविशिष्टघटत्वाद्यवच्छिन्नविषयतात्वेनास्तां ननु का-र्य्यताविषयतानिरूपितघटत्वावच्छिन्नविषयतात्वेनेति वा-च्यं, परम्परया कार्य्यत्वविषयतानिरूपितघटत्वावच्छिन्नवि-षयताशालिशाब्दस्यापि तन्मते प्रामाणिकतया तत्साधा-रणघटपदशक्तिज्ञानजन्यतावच्छेदकत्वनिर्व्वाहार्थं लाघवेन कार्य्यताविषयतानिरूपितत्वसहितघटत्वावच्छिन्नविषयता-त्वेन तादृशजन्यतावच्छेदकत्वस्वीकारावश्यकत्वादित्याहुः। तन्न समीचीनं, विधिप्रत्ययरहितानां बुद्धिस्थकार्य्यतावा-चिसर्व्वनामपदान्तरघटितानां कार्य्यताघटितधर्म्मान्तरवा-चिसर्व्वनामपदानां वाक्यभावापन्नानां प्रामाण्यापत्तेर्दुर्व्वा-रत्वात्, तद्वाक्यतः शाब्दे स्वीक्रियमाणे सर्व्वनामपदान्तरो-पस्थाप्यकार्य्यताविषयतानिरूपितत्वापन्नापरतत्पदोपस्थाप्य-तावच्छेदकतापर्य्याप्त्यधिकरणकार्य्यताघटितधर्म्मावच्छिन्नवि-षयतायास्तादृशशाब्दबोधेऽप्यनपायात्। ननु कार्य्यताघटि-तधर्म्मद्वयवाचिसर्व्वनामपदद्वयघटितवाक्यस्य विधिप्रत्ययर-हितस्यापि प्रामाण्यमिष्टमेवेतिचेदत्रातीव रहस्यं विधिप्र-त्ययरहितस्य कार्य्यताघटितधर्म्मवाच्येकमात्रसर्व्वनामपद-घटितवाक्यस्याप्रामाण्यं, प्रामाण्यं पुनस्तादृशार्थकसर्व्वना-

मपदद्वयघटितवाक्यस्य । एतत्तत्त्वं वयमवधारयितुं न प्रभवामः ।

तत्तत्पदजन्यबोधविषयत्वनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितसङ्केतीयविषयताशालिज्ञानमितरान्वयशाब्दकारणं, कार्य्यकारणयोः सम्बन्धस्य विशिष्यत्वं तत्तत्पुरुषीयत्वमपि तत्र निवेशनीयमिति गदाधरसम्मतम् ॥ तादृशबोधविषयत्वनिष्ठप्रकारतानिरूपितमुख्यविशेष्यताशालिज्ञानमितरान्वयप्रयोजकं प्रकारत्वे सम्बन्धविशेषावच्छिन्नत्वं न निविश्यते इति तु केषाञ्चिन्मतं, एतन्मतं गदाधरेण दूषितं यथा, पशुत्वावच्छिन्ने पशुपदवाच्यताग्रहजन्यपशूपस्थित्यादिदशायां पशोः शाब्दे जायमाने पशुत्वविशेष्यकशाब्दस्यापयोगिन्याः पशुत्वधर्म्मिकवृत्तिज्ञानं विना यावत् सामग्र्याः सद्भावे पशुत्वमवच्छेदकतासम्बन्धेन पशुपदजन्यबोधविषयतावद्भवत्वित्याकारकाधुनिकसङ्केतीयमुख्यविशेष्यताज्ञानस्य पशुत्वे सत्त्वेन तत्रेतरान्वयापत्तिर्दुर्वारैव । तादृशेच्छीयप्रकारतायां स्वरूपसम्बन्धावच्छिन्नत्वं निवेश्य तद्वारणेच व्यर्थं विशेष्यतायां मुख्यत्वनिवेशनमिति । अत्रचावच्छेदकतायाः संसर्गत्वं पारतन्त्र्येण प्रकारस्यैव स्वीक्रियते नतु स्वातन्त्र्येण भातस्यापीत्येव नियमेन प्रदर्शितेच्छायां बोधविषयत्वस्य स्वातन्त्र्येण भातस्यावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारत्वं कथमपि नहि सम्भवतीति केषाञ्चिन्मतमपि सुष्टुतया प्रतिभातीतिध्येयम् । तद्यथातथास्तु । अथ प्रकारतायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशेऽपि विशेष्यतायां मुख्यत्वनिवेशनमावश्यकमन्यथा घटपदजन्यबोधविषयपटकालीनघटो घटपदाद्बोद्धव्य इत्याकारकाधुनिकसङ्केतज्ञानात्

तादृशकालीनत्वापन्नघटत्वावच्छिन्नविषयकशाब्दस्यैव सर्व्वा-
नुभवसिद्धत्वमिति तदेकदेशे पटत्वावच्छिन्ने ऽपीतरान्वः
यः स्याद् यदि निरुक्तविशेष्यतायां मुख्यत्वनिवेशोनस्या-
त्, निरुक्तसङ्केतविषयैकदेशोभूते पटेऽपि घटादिपदजन्य-
वोधविषयत्वनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपित -
तादृशाधुनिकसङ्केतीयप्रकारतात्मकविशेष्यतायाः सत्त्वात् ।
नच घटपदजन्यवोधविषयत्वनिष्ठप्रकारतानिरूपितसङ्केती-
यपटनिष्ठविशेष्यतायाः प्रकारतात्मकत्वे ऽपि तत्रापि पट-
त्वावच्छिन्नविषयकशाब्दोपयोगिवृत्तित्वं नाप्रामाणिकं, न-
हि पदजन्यवोधविषयतानिष्ठप्रकारतानिरूपितसङ्केतीय मु-
ख्यविशेष्यतैव वृत्तिरिति नियमः। एवञ्च प्रोक्तविशिष्टसङ्के-
तज्ञानात् सामग्रीसत्त्वे निरुक्तकालीनघटत्वावच्छिन्नवि-
षयकशाब्दस्येव शुद्धपटत्वावच्छिन्नविषयकशाब्दस्यापीष्टत्वेन
तादृशसङ्केतस्यामुख्यविशेष्ये पटेऽपीतरान्वयवोध इष्ट एवेति
वाच्यं यतो यत्पदाधीनयादृशविशिष्टविषयकशाब्दजनने स-
त्येव यादृशविशिष्टविषयकेच्छाया विषयसिद्धिर्भवेत् तादृ-
शविशिष्टविषयकशाब्दवोधे तादृशविशिष्टविषयकसङ्केतवि-
षयत्वस्यैव तत्पदवृत्तित्वं सर्व्वानुमतम् । अत एव घ-
टपदाद्घटोवोद्धव्य इत्याकारकभगवदिच्छाया यथाकथञ्चित्
कालिकादिसम्बन्धेन घटपदवद्वोधविषयो घटो भवत्वित्या-
कारकेच्छापेच्चया गुरुशरीरत्वेऽपि समशरीरत्वेऽपिवा ज-
न्यत्वघटिते भगवत्सङ्केते आधुनिकसङ्केतेच वृत्तित्वं स-
र्व्वैरेव सिद्धान्तितम्। एवं सर्व्वनामशक्त्यनुगमशरीरे संस-
र्गविधया जन्यत्वप्रवेशोऽपि साधीयांस्त, तत्र सम्बन्धघटक-
स्वजन्यत्वमनिवेश्य केवलस्वप्रयोजकवुद्धिप्रकारावच्छिन्नवि-

षयकत्वस्य सम्बन्धतया निवेशे तत्पदाद्यप्रयोगे घटादिप-दज्ञानजन्यशाब्दबोधेनापि तादृशभगवदिच्छाया विषय-सिद्धिसम्भवेन तत्पदघटितायास्तत्पदस्य शक्तेर्वृत्तित्वं व्याह-न्येत । एवञ्च प्रोक्ताधुनिकसङ्केतस्थले शुद्धपटत्वावच्छिन्न-विषयकबोधेन तत्सङ्केतविषयापर्य्यवसानात् तादृशसङ्केते शुद्धपटत्वावच्छिन्नविषयकशाब्दनिरूपितवृत्तित्वं न खलु स-म्भवदुक्तिकम् । तथाच यद्धर्म्मावच्छिन्नविषयकशाब्दबोधो यादृशेच्छाया उपादेयो भवेत् तादृशसङ्केतविषयता तद्ध-र्म्मावच्छिन्नविषयकशाब्दे वृत्तिरित्येवायातं । उपादेयसिद्धे-रेवेच्छाया विषयसिद्धिरूपत्वादतएवानुमितिविषयकानुमि-तिर्जायतामित्याकारकेच्छाया: सामान्यतो निखिलानुमि-तौ प्रकारत्वसत्त्वेऽपि तादृशेच्छाया वन्ह्यनुमितिप्रतिबन्ध-कसिद्धौ नोत्तेजकत्वं तस्यास्तादृशेच्छानोपादेयत्वात् कि-न्त्वनुमितिविधेयकानुमितिप्रतिकूलसिद्धावेवेति सर्व्वसिद्धा-न्त: । इत्थञ्चेतरान्वयबोधप्रयोजकतया सङ्केतीयमुख्यवि-शेष्यत्वमनिवेश्य केनोपायेन निरुक्तसङ्केतविषयताघटकीभू-तपदरूपैकदेशनिष्ठबोधविषयताप्रकारतानिरूपितमुख्यविशे-ष्यताबलेनापि तादृशैकदेशे इतरान्वयबोधो वारयितुं श-क्यत इति चेत्, तत्तत्पदजन्यबोधनिष्ठोपादेयत्वाख्यविषय-तानिरूपितविषयत्वनिष्ठस्वरूपसम्बन्धावच्छिन्ना या प्रका-रता तन्निरूपितसङ्केतीय विषयताज्ञानस्यैवेतरान्वयोपयो-गित्वस्वीकारात् उपादेयताचेष्टसाधनताज्ञानधर्म्मितानियम्या इच्छीयविलक्षणविषयतारूपा । साच क्वचिदिच्छाया विशे-ष्यतारूपा क्वचित्तस्या: प्रकारतारूपा क्वचिच्चावच्छेदकतारू-पापि यत इच्छा निवर्त्तते तन्नैवोपादेयतेत्येव पर्य्यवसितम् ।

सैव घटमिच्छतीतिवाक्यस्थद्वितीयातात्पर्य्यविषयरूपा न-चेच्छार्थकधातु—समभिव्याहृतद्वितीययेच्छादे मुख्यविशेष्यत्वमेव बोध्यतां किमुपादेयत्वनामकविलक्षणविषयतास्वीकारेणेतिवाच्यं घटपदाद् घटत्वावच्छिन्नविषयत्वशाब्दबोधो जायतामितीच्छातात्पर्य्यकाद् घटपदाद् घटबोधमिच्छतीतिवाक्यस्थद्वितीयया मुख्यविशेष्यत्वबोधवत्, घटपदाद् घटोबोद्धव्यो घटपदं घटं बोधयत्वित्यन्यतरेच्छातात्पर्य्यकवाक्यस्थलेऽपि घटपदाद् घटबोधमिच्छतीत्येव प्रयोगदर्शनेनोपादेयतारूपविलक्षणविषयतास्वीकारावश्यकत्वाद् वन्हिमनुमिनोति न पर्व्वतमित्यनुरोधेन द्वितीयाबोध्यविधेयताख्यविलक्षणविषयतास्वीकारवत्, इच्छार्थकधातुसमभिव्याहृतद्वितीयायाः सर्व्वत्र मुख्यविशेष्यत्वमात्रतात्पर्य्यविषयत्वे प्रदर्शितान्यतरेच्छामुख्यविशेष्यतयोः पदपदार्थान्यतरनिष्ठतया तादृशान्यतरेच्छास्थले घटमिच्छति घटपदमिच्छतीत्यादिप्रयोगस्य प्रामाण्यापत्तेः। उपादेयतात्वंच विशेष्यताप्रकारताऽवच्छेदकतैतत्त्रितयसाधारणमनुमितिविधेयतात्वस्य विशेष्यताप्रकारतासाधारण्यवत्। आद्ये घटमिच्छतीत्यादौ मुख्यविशेष्यत्वमेवोपादेयत्वं द्वितीये घटोनीलो भवत्वित्यादौ नीलगुणनिष्ठप्रकारत्वमेवतत्। तृतीयेच घटपदाद् घटोबोद्धव्यो घटपदं घटं बोधयत्वित्यादौ विषयत्वजनकत्वरूपप्रकारांशे प्रविष्टबोधे प्रकारतानिरूपितावच्छेदकतारूपमुपादेयत्वमेव। न चोपादेयताया इष्टसाधनताधर्म्मितानियम्यत्वे इच्छाया विशेष्यविशेषणभाववैपरीत्यं केन निर्वाह्यं भवेत् सर्व्वत्रैवोपादेयमुख्यविशेष्यकेच्छाया एव साम्प्रतसम्भवादितिवाच्यं यतोयत्र घटपदजन्यघटविषयकशा-

ब्दबोध इष्टसाधनमित्याकारकनिश्चयोजायते तत्रैव ता-
दृशशाब्दबोधमुख्यविशेष्यिकेच्छा जायते यत्रचेष्टसाधनस्य
घटपदजन्यबोधस्य घटो विषयो भवतु इष्टसाधनस्य घट-
विषयकशाब्दबोधस्य घटपदं जनकं भवत्वित्याद्याकारकेष्ट-
साधनतानिश्चयवैलक्षण्यं तत्रेच्छाया विशेष्यविशेषणभाववै-
लक्षण्यं सुसम्पद्यते । इष्टसाधनत्वप्रकारतानिरूपितमुख्य-
विशेष्यताशालिनिश्चय एवेच्छायाः कारणमित्यनियमात् ।
नचेच्छीयोपादेयत्वनामकविलक्षणविषयत्वमप्रामाणिकं के-
नापि ग्रन्थकारेणालिखितत्वादिति वाच्यम् । उपादेयता-
वच्छेदकत्वस्यात्यन्तिकदुःखनिवृत्तित्वरूपमुक्तित्वे कार्य्यता-
वच्छेदकताप्रयोजकतया मुक्तिवादे गदाधरेण स्वहस्तित-
त्वात् । तादृशोपादेयताया इच्छीयविलक्षणविषयतारू-
पतामन्तरेण प्रकारान्तरस्य दुर्वचत्वात् । इच्छार्थकधातु-
योगे द्वितीयाया विलक्षणविषयार्थकत्वस्वीकारं विना ग-
त्यन्तराभावस्य दर्शितत्वाच्च । अत्रेदमवधातव्यम्, पशुत्व-
मवच्छेदकतासम्बन्धेन पशुपदजन्यबोधविषयतावद् भव-
त्वितीच्छीयावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपित-
मुख्यविशेष्यताया इतरान्वयोपयोगित्ववारणेऽपि पशुत्वं स-
मवेतत्वसम्बन्धावच्छिन्नपशुपदजन्यबोधविषयत्ववद् भवत्वि-
त्याकारकेच्छीयसमवेतत्वसम्बन्धावच्छिन्नत्वसहित विषय-
तात्वावच्छिन्नप्रकारतायां स्वरूपसम्बन्धावच्छिन्नत्व सत्त्वा-
त् स्वरूपसम्बन्धेन शाब्दबोधीयप्रकारतात्मकविषयतायाः
पशुत्वे निर्विवादत्वात् । ईदृशसङ्केतीयविषयत्वस्यापि प-
शुत्वं पशुपदजन्यबोधविषयतावच्छेदकं भवत्वितीच्छा वि-
षयत्वस्येव शाब्दानुपयोगित्वाद् विवक्षितविवेकेन निरुक्ते-

च्छादयस्यैव तुल्यत्वात् । एवंच स्वरूपसम्बन्धावच्छिन्नत्व-
स्य प्रकारतायां निवेशेऽपि कथमुक्तसङ्केतविशेष्ये इतरान्व-
यवारणं स्यात् । नच तत्तत्पदजन्यबोधविषयतात्वपर्य्याप्त्य-
वच्छेदकताकस्वरूपसम्बन्धावच्छिन्नप्रकारत्वं निविश्यते ।
एवं चोक्तसङ्केतीय विषयत्वनिष्ठप्रकारतायाः समवेतत्वाव-
च्छिन्नत्वनाप्यवच्छेदात् प्रकारतायां न निरुक्तधर्म्मपर्य्याप्त्य-
वच्छेदकताकत्वं वर्त्तते इति वाच्यं निरुक्तरीत्या पर्य्याप्ति-
निवेशे पशुपदजन्यबोधीयपशुत्वावच्छिन्नविषयतावान् भ-
वत्वित्याकारकेच्छाविषयताया असंग्रहप्रसङ्गात् । नच प-
र्य्याप्तिमनिवेश्य सांसर्गिकावच्छिन्नत्वानवच्छिन्नबोधविषय-
तात्वघटितधर्म्मावच्छिन्न स्वरूपसम्बन्धावच्छिन्नसङ्केतीय प्र-
कारतानिरूपितविषयत्वज्ञानमेवेतरान्वयजनकतया विवक्ष-
णीयमिति वाच्यं तथासति पशुत्वं समवेतत्वसम्बन्धावच्-
छिन्न विषयताभिन्न पशुपदजन्यबोधविषयतावद् भवत्वि-
त्याकारकेच्छाविशेष्यतायाः संग्रहप्रसङ्गात् प्रसङ्गाच्च पशुत्व-
मितरान्वयविषयत्वानिरूपितपशुपदजन्यबोधविषयतावद् भ-
वत्वित्याकारक संकेतविशेष्यतासंग्रहस्य । ईदृशेच क्वावि-
षयत्वद्वयस्यैवावच्छेदकत्वसम्बन्धावच्छिन्न निरुक्तसङ्केतीय
प्रकारतानिरूपित विशेष्यतासमशीलतयेष्टत्वायोगात् । त-
स्मात् स्वरूपसम्बन्धावच्छिन्नं यत् तत्तत्पदजन्यबोधविष-
यत्वनिष्ठं सङ्केतीयप्रकारत्वं तन्निरूपितायाः सामान्यतः
शाब्दप्रयोजकविषयताया एवेतरान्वयबोधप्रयोजकत्वं स्वीक-
र्त्तव्यं, निरुक्तमुख्यविशेष्यताज्ञानस्ये तरान्वयबोधजनकतावा-
दिमतेऽपि मुख्यविशेष्यतायां सामान्यतः शाब्दप्रयोजकत्व-
स्य निवेशं कृत्वा चरितार्थत्वसम्भवात् सङ्केतीयप्रकारता-

यां स्वरूपसम्बन्धावच्छिन्नत्वस्य तादृशविशेष्यतायां निरुक्तप्रकारतानिरूपितत्वांशस्य वा निवेशो व्यर्थ एव । अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वनिष्ठप्रकारतानिरूपितनिरुक्तसङ्केतीयमुख्यविशेष्यतायां वृत्तित्वस्य सर्वैरेवास्वीकृततया तादृशविशेष्यतायां सामान्यतः शाब्दाप्रयोजकत्वेन तच्चेतरान्वयबोधप्रयोजकत्वमापादयितुं न शक्यते । एवञ्च मुख्यविशेष्यतापक्ष एव साधीयान् गदाधरसिद्धान्तस्तु न सुष्टुतया प्रतिभाति गौरवात् । अथावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसङ्केतीयमुख्यविशेष्यतायां कुतोन सामान्यतः शाब्दोपयोगिवृत्तित्वमिति चेन्न यतः पशुत्वावच्छिन्नपशुविधेयकशाब्दं विना तादृशावच्छेदकत्वात्नगाहिसङ्केतस्य विषयसिद्धिर्भवितुं नार्हति शाब्दबोधे पशुविषयकत्वंच पशुधर्म्मिकवृत्तिज्ञानजन्यपशूपस्थितिनिर्वाह्यं वृत्तिज्ञानाविषयपदार्थस्य शाब्दे भानानुपगमादेवंच पशुत्वविशेष्यकज्ञानं पशुत्वमेव स्मारयति नतु पशुमतोऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसङ्केतीयमुख्यविशेष्यत्वे शाब्दोपयोगिवृत्तित्वं कथमपि नहि सम्भवतीत्यधिकेनालम् ॥ प्राभाकरमते शक्तेरतिरिक्तत्वं तन्मते पुष्पवन्तपदस्य चन्द्रत्वसूर्य्यत्वरूपधर्म्मद्वयपर्य्याप्तावच्छेदकताकनिरूपकतानिरूपितैकाशक्तिः । न्यायमतेच पुष्पवन्तपदाच्चन्द्रत्वविशिष्टविषयकःसन् सूर्य्यत्वविशिष्टविषयकबोधो जायतामित्याकारकभगवत्सङ्केतीयविषयताविशेषरूपा सा । उभयमत एव शक्तिग्रहजन्यतावच्छेदकं शक्तिग्रहजन्योपस्थितिजन्यतावच्छेदकञ्च चन्द्रत्वावच्छिन्नविषयकत्वे सति सूर्य्यत्वावच्छिन्नविषयक शाब्दत्वमतो निशाया

पुष्पवन्तप्रकाश इत्यादिवाक्यात्तत्पदशक्तिप्रमावतां कदाचिदपि शाब्दोन जायते । अथ तपन उदेति निशायां पुष्पवन्तप्रकाशइत्यादिद्विविधवाक्यजन्यचन्द्रसूर्य्यविषयकशाब्दबोधस्य शक्तिभ्रमजन्यतया प्रसिद्धस्य केवलचन्द्रपरादुक्तवाक्यस्थपुष्पवन्तपदाच्छक्तिप्रमावतामप्यापत्तिर्दुर्वारैव । नच तादृशप्रमावतां पुष्पवन्तौ स्तः प्रलयः पुष्पवन्ताभाववानित्याकारकबोधस्यैव नियमतो दृष्टत्वेन साक्षात्परम्परयैकविषयतानिरूपितचन्द्रसूर्य्यविषयकत्वसहितशाब्दत्व एव तत्पदशक्तिप्रमाजन्यतावच्छेदकत्वं स्वीकार्य्यम् । आद्ये चन्द्रविषयता सूर्य्यविषयताचद्वयमेव द्वित्वनिष्ठैकप्रकारतायाः साक्षान्निरूपितं द्वितीयेच परम्परया प्रलयनिष्ठैकविशेष्यतानिरूपितमेव चन्द्रसूर्य्यनिष्ठविषयताद्वयम् । एतावतैत्यैवायातमेकवाक्यतापन्नवाक्यादेव चन्द्रसूर्य्योभयविषयकज्ञानमेव तादृशप्रमातो जायते ऽतो निरुक्तवाक्यजन्यसमूहालम्बनबोधः शक्तिप्रमातो जनितुं न प्रभवतीति वाच्यम् विधोरस्तात्परमसमायां पुष्पवन्तप्रकाश इति वाक्याच्छक्तिप्रमावतां शाब्दस्यावारणात् तत्र सूर्य्यविषयतायां प्रकाशनिष्ठविशेष्यतायाः साक्षान्निरूपितत्वसत्त्वेन विधुनिष्ठविषयतायांच तादृशविशेष्यतायाः परम्परया निरूपितत्वसत्त्वेन चन्द्रसूर्य्योभयविषयतायामेकविषयतानिरूपितत्वादितिचेन्न, यादृशविषयताशालिशाब्दबोधस्य पुष्पवन्तपदधर्म्मिकस्य चन्द्रसूर्य्योभयविषयकत्वेन शक्तिज्ञानाज्जननं सर्व्वानुभवसिद्धं तादृशविषयताशालिशाब्दबोधे यादृशयादृशतात्पर्य्यज्ञानमुपयोगि भवेत्तादृगतात्पर्य्यकूटस्यैकैकस्य ज्ञानं निरुक्तोभयविषयकशक्तिज्ञानस्य तज्जन्योपस्थितेश्च सह-

कारितयोपगन्तव्यमितावतैव सर्व्वसामञ्जस्यादनुमितिकारण-पञ्चतायाविविधलिङ्गपरामर्षेषु प्रातिस्विकरूपेण सहकारित्ववदित्यास्तां विस्तरः ॥

वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तलक्षणमत्र वाच्यत्वे सतीत्यनुपादाने गगनपदस्य निरवच्छिन्न शक्तिस्वीकर्तृप्राचीनैः शक्तिसम्बन्धेन गगनपदाच्छब्दादिरूपासाधारणधर्म्मप्रकारेण गगनोपस्थितेरङ्गीकृतत्वेन प्रवृत्तिनिमित्ततया व्यवहाराविषये शब्दादावतिव्याप्तिः स्यात् । वाच्योपस्थितिप्रकारत्वानुपादाने क्षित्यतेजो मरुत्पदानां सावयवक्षित्यादिष्वपि वाच्यत्वसत्त्वेन वाच्यतावच्छेदकतावच्छेदकीभूतसम्बन्धावच्छिन्नवाच्यवृत्तित्वसत्त्वनच तेष्वतिव्याप्तिः स्यात् । वाच्यवृत्तित्वे सतीत्यनुपादाने जात्याकृतिरूपधर्म्मद्वयावच्छिन्ने शक्तगवादिपदानामाकृतौ प्रवृत्तिनिमित्तत्वं स्यादाकृतेः शाब्दबोधे उत्सर्गतो भानस्य सर्व्वसम्मतत्वेन तत्रवाच्यतास्वीकारावश्यकत्वेऽपि शक्यव्यावर्त्तकतया तत्र प्रवृत्तिनिमित्तत्वस्य सर्व्वैरेवास्वीकारात्, शक्तिव्यावर्त्तक शक्यतावच्छेदकस्यैव प्रवृत्तिनिमित्तत्वात् । अत्रवृत्तित्वं साक्षात्सम्बन्धेन वक्तव्यमितिगदाधरः साक्षात्सम्बन्धत्वंच प्रकारताविशिष्टसांसर्गिकविषयतावत्त्वं वैशिष्ट्यंच स्वनिरूपितत्वस्वनिरूपितविशेष्यतानिरूपितत्वोभयसम्बन्धेन परम्परासम्बन्धोहि तदेव भवति याद्दशसम्बन्धघटकप्रथमपदार्थनिष्ठसांसर्गिकविषयतायां प्रकारतानिरूपितत्वं तद्घटकचरमपदार्थनिष्ठसांसर्गिकविषयतायांच विशेष्यतानिरूपितत्वं तिष्ठेद् यथा सामानाधिकरण्यसम्बन्धेन वन्हिविशिष्टोधूमः । अत्र चाधि-

करणत्वनिष्ठसांसर्गिकविषयतायां वह्निप्रकारतानिरूपितत्वं वृत्तित्वनिष्ठसांसर्गिकविषयतायांच धूमनिष्ठविशेष्यतानिरूपितत्वमतः संयोगसमवायादिकं पर्व्वतत्वव्यापकवह्निप्रतियोगिकत्वादिरूपगुरुपदार्थघटितमपि, संयोगादिकंच पर्व्वतादौ वह्न्यादेःसाक्षादेव सम्बन्धः। उक्तधर्म्मावच्छिन्नसंसर्गतायां निरुक्तोभयसम्बन्धेन प्रकारतावैशिष्ट्यस्याक्षतत्वात्। एवंचावयवसंस्थानविशेषरूपाकृतेरेकार्थसमवायरूपसामानाधिकरण्यात्मकपरम्परासम्बन्धेन वाच्यवृत्तितया तत्र न प्रवृत्तिनिमित्तत्वमितिगदाधरस्याशयः। यत्तु वाच्यतावच्छेदकतावच्छेदकसम्बन्धेन वाच्यवृत्तित्वमेव निवेशितं नतु सम्बन्धसाक्षात्त्वं विवक्षणीयं परम्पराया वृत्त्यनियामकत्वेनाक्षतावतिव्याप्तिवारणसम्भवात् तत्तुच्छं स्वसमवायिसमवेतत्वसम्बन्धेन वाच्यतावच्छेदकतावच्छेदकेन गवादिनिरूपितवृत्तितायाआकृतावविवादात्। एकार्थसमवायस्य वृत्तिनियामकतायाः सर्व्वसम्मतत्वादतएव सिद्धान्तलक्षणविचारे दीधितिकारेण जगदीशेनच तत्सम्बन्धेनाधाराधेयभावः स्वहस्तितः। अथ साक्षात्सम्बन्धेन-वाच्यवृत्तित्वनिवेशो गदाधरसम्मतः। वृत्तित्वपर्य्यन्तविवक्षा-कतिपयसम्मता तद्यथायथास्तु परन्तु वृत्त्यनियामकातिपरम्परया पक्षतायां पक्षपदप्रवृत्तिनिमित्तत्वं कथंस्यात्। यद्यपि नास्येतरभेदानुमापकत्वं तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तमितिचिन्तामणिप्रतीकेन तत्र प्रवृत्तिनिमित्ततायाः स्पष्टावगमात्। दीधितिकृता सिध्यभाव एव पक्षव्यवहारे प्रवृत्तिनिमित्तमुक्तमितिविशिष्टसिद्ध्यभावस्यात्मनिष्ठस्यैवानुमितिहेतुत्वेऽपि तस्य परम्परासम्बन्धादेव पर्व्वतादौ पक्ष-

व्यवहार इति ध्येयमित्युक्तम्। मथुरानाथेनापि परम्परा-सम्बन्धेनैव तस्य प्रवृत्तिनिमित्तत्वमुक्तम् । तत्पदप्रवृत्ति-निमित्ततावच्छेदकसम्बन्धत्वस्य प्रदर्शितत्वादिति चेन्न यतो-वाच्यवृत्तित्वमित्यत्र वृत्तित्वं न विवक्षितं किन्तु सम्बद्धत्वं तच्च परम्परासम्बन्धात्मकं साक्षात्सम्बन्धात्मकंच । इयांस्तु विशेषो यादृशपदस्य वाच्यतावच्छेदकं द्विविधं तयोरेकं सा-क्षात्सम्बन्धेनावच्छेदकमपरंच परम्परासम्बन्धेन तादृशपद प्रवृत्तिनिमित्तत्वं साक्षात्सम्बन्धेन वाच्यतावच्छेदक एव स्वी-क्रियते यादृशपदस्यतु केवलपरम्परासम्बन्धेन वाच्यतावच्छे-दकं तिष्ठेत् तादृशपदस्य वृत्त्यनियामकपरम्परासम्बन्धेना-पि प्रवृत्तिनिमित्तत्वं सर्व्वसम्मतमेव यथा पश्चादिपदपक्ष-पदप्रवृत्तिनिमित्तत्वे पशुत्वपक्षत्वयोः । अथ किं निवेश-नैवैवम्बिधसिद्धिर्भवेन्नहि कथामात्रेणतत्सिद्धिर्भवितुमर्हती-तिचेन्न स्वनिरूपिता या तत्तत्पदबोध्यत्वनिष्ठभगवत्स-ङ्केतविषयता तन्निरूपितमवच्छेदकत्वनिष्ठं यद्विषयत्वं त-न्निरूपितं सांसर्गिकावच्छिन्नत्वनिष्ठं यद्विषयत्वं निर्वक्ष्य-माणोभयाभाववती तन्निरूपिता या विषयता तदाश्रयी-भूतो यादृशः सम्बन्धस्तेन सम्बन्धेन तत्तत्पदवाच्यताव-न्निरूपितसम्बद्धत्वस्य विवक्षणीयत्वात् । चरमविषयतायां साक्षात्सम्बन्धावच्छिन्नावच्छेदकताकत्वावच्छिन्ना या सा-मान्यतो भगवत्सङ्केतीयबोद्धव्यत्वनिष्ठा प्रकारता तन्निरूपि-ता यावच्छेदकत्वनिष्ठप्रकारता तन्निरूपितं यत् सांसर्गि-कावच्छिन्नत्वनिष्ठं प्रकारत्वमीदृशप्रकारतानिरूपितत्व—प-रम्परासम्बन्धवृत्तित्वोभयाभावनिवेशेन कथितसमीहितसि-द्धेस्तथाहि यत्र साक्षात्सम्बन्धः परम्परासम्बन्धश्च द्वयमेव

वाच्यतावच्छेदकतावच्छेदकं तत्र परम्परासम्बन्धो निरुक्तो-
भयाभाववद्विषयतावत्त्वविरहेण धर्त्तुं न शक्यते तद्विषयता-
यां परम्परासम्बन्धनिष्ठत्वस्य निरुक्तसाक्षात्सम्बन्धघटिताव-
च्छिन्नत्वनिष्ठविषयतानिरूपितत्वस्य च द्वयोरेवसत्त्वात् कि-
न्तु तत्र साक्षात् सम्बन्ध एव धर्त्तुं शक्यते तत्सम्बन्धनिष्ठ-
निरुक्तविषयतायां प्रोक्तसाक्षात्सम्बन्धघटितावच्छिन्नत्वनि-
ष्ठविषयतानिरूपितत्वसत्त्वेऽपि परम्परासम्बन्धनिष्ठत्वाभावे-
नोक्तोभयाभावस्याक्षतत्वात् । यत्र च केवलपरम्परासम्बन्ध
एव वाच्यतावच्छेदकतावच्छेदकस्तत्र तत्सम्बन्धेनैव प्रवृ-
त्तिनिमित्ततोपपत्तिरपि तादृशसम्बन्धनिष्ठनिरुक्तविषयतायां
परम्परासम्बन्धनिष्ठत्वेऽपि साक्षात्सम्बन्धघटितावच्छिन्नत्व-
निष्ठविषयतानिरूपितत्वाभावेन निरुक्तोभयाभावस्याक्षत-
त्वादिति पशुत्वपक्षत्वादौ परम्परासम्बन्धेनप्रवृत्तिनिमित्तत्व-
मक्षतमेवाकृतौ तु तदसत्त्वनिर्वाहश्च । अथ यत्र शक्यता-
वच्छेदकतावच्छेदकसम्बन्धः साक्षात् परम्पराच द्विविध ए-
व पदप्रवृत्तिनिमित्तताघटकतया प्रविष्टस्तत्र कागतिर्य-
था पचिगम्यादिसकर्म्मकधातोरनुकूलत्वरूपवृत्त्यनियामकप-
रम्परासम्बन्धेन विक्लित्यादिकं साक्षात् सम्बन्धेन च व्या-
पारत्वं द्वयमेव प्रवृत्तिनिमित्तं नतु गोत्वादिवत् केवलव्या-
पारत्वं तस्यातिप्रसक्तत्वादन्यथा धेनुपदस्यापि केवलगोत्वे प्र-
वृत्तिनिमित्तत्वं स्यादिति चेदत्र केचिद् विक्लित्याद्यनुकूल-
व्यापारत्वस्य फलवैलक्षण्येन वैलक्षण्यस्यावश्यकतया फलवि-
शेषजनकतया सिद्धजातिविशेष एव व्यापारनिष्ठक्रिया-
त्वव्याप्यव्यापारत्वात्मको धर्म्म एवञ्च 'गवादिपदाज्जात्याकृ-
त्युभयप्रकारकबोधवद् गम्यादिपदादपि फलव्यापारत्वोभ-

यप्रकारबोधस्य सर्व्वसम्मततया तदुभये गम्यादिपदशक्यता-वच्छेदकत्वावश्यकत्वेऽपि गम्यादिपदप्रवृत्तिनिमित्तत्वस्यान-तिप्रसक्तो व्यापारत्वरूपजातिविशेष एव स्वीकारादित्याहुः।
अन्ये तु कर्त्तृतिङादिसमभिव्याहारस्थले सकर्म्मकधातोः फ-लावच्छिन्नव्यापारबोधकत्वावत् कर्म्मवाचकतिङादिसमभि-व्याहारस्थले व्यापारावच्छिन्नफलबोधकतया सकर्म्मकधातूनां फले व्यापारेच खण्डशक्तिद्वयं स्वीकार्य्यमाकाङ्क्षासाचिव्ये-नच कर्म्मतिङादिस्थले व्यापारावच्छिन्नफलस्य कर्त्तृतिङा-दिस्थलेतु फलावच्छिन्नव्यापारस्य बोधनियमनिर्वाहात् के-वलफलावच्छिन्नव्यापारस्य व्यापारावच्छिन्नफलस्य वा त-त्तद्धातुशक्यत्वे उक्तविपरीतबोधे लक्षणा स्यात्। एवञ्च व्यापारत्वं फलविशेषत्वञ्च द्वयमेवानतिप्रसक्ततया साक्षा-त्सम्बन्धेनैव प्रवृत्तिनिमित्तं भवतीति कानुपपत्तिवार्त्ता-पि। नचद्विकर्म्मकधातूनां फलावच्छिन्नव्यापारावच्छि-न्नव्यापारार्थकतया दुहादिभिन्नद्विकर्म्मकधातूनां खण्डश-क्तिस्वीकारमतेऽपिकर्म्मतिङां मुख्यकर्म्मबोधकतास्थले तत्तद्धा-तूनां फलावच्छिन्नप्रथमव्यापारे चरमव्यापारेच शक्तिद्वयमे-वास्तां नतु फले व्यापारद्वयेच शक्तित्रयमेवञ्च फलावच्छि-न्नव्यापारत्वे प्रवृत्तिनिमित्तत्वं न स्यादितिवाच्यमिष्टत्वात् त-च चरमव्यापारत्वस्यैव प्रवृत्तिनिमित्तत्वोपगमात्। वस्तुत-स्तु दुहादिभिन्नद्विकर्म्मकधातूनामपि मुख्यकर्म्मबोधकपदा-समभिव्याहारस्थले तिङादिभिर्गौणकर्म्मण एवोक्तत्वानुरोधे-न फलेऽपि तत्तद्धातूनां खण्डशक्तेः स्वीकारावश्यकत्वादि-त्याहुः। नव्यास्तु वाच्यवृत्तित्वेसतीति सावधारणतया वा-च्येतरावृत्तित्वे सतीत्यर्थो लभ्यते तच्च वाच्यत्वव्याप्यत्वे

सतीति पर्य्यवसितम् । एवञ्च वृत्त्यनियामकपरम्परासम्बन्धा-प्रवेशप्रवेशनिवन्धनः कोदोषोभवितुमर्हति । आकृतेर्गोगव-यादिसाधारण्येन तैजसघटपार्थिवघटादिसाधारण्येन च ए-वं स्वाश्रयावयवसमवेतसत्तादिजातिगुणादिसाधारण्येन श-क्यतावच्छेदकगोत्वपार्थिवघटत्वाद्यवच्छिन्नवाच्यत्वाव्याप्यत-या कम्बुग्रीवादिगलकम्बलादिषु तत्तत्पदप्रवृत्तिनिमित्तत्वा-भावोपपत्तिः । पचत्वपशुत्वफलावच्छिन्नव्यापारत्वादीनां परम्परासम्बन्धघटितप्रवृत्तिनिमित्तत्वोपपत्तिश्च केवलव्यापा-रत्वस्य वाच्यताव्याप्यत्वाभावात् । नच विक्लित्तिकृतित्वो-भयत्वरूपेण पचिवाच्यताया व्याप्यतावदाकृतिघटत्वाद्यु-भयत्वेन घटादिपदवाच्यताव्याप्यतायाः सर्व्वसम्मततया त-दुभयस्मिन् प्रवृत्तिनिमित्तत्वमशक्यवारणमेवेतिवाच्यं तत्तत्प-दवाच्यताव्याप्यधर्म्मान्तराघटितत्वस्यापि निवेशनीयतया त-दुभयस्मिन् प्रवृत्तिनिमित्तत्वापादनासम्भवात् तदुभयस्य नि-रुक्तव्याप्यघटत्वादिघटितत्वात् । फलावच्छिन्नव्यापारबोध-कधातुस्थले केवलव्यापारत्वस्य केवलफलस्य वा तत्तद्धातुवा-च्यताव्याप्यताविरहेण तदुभयस्य प्रवृत्तिनिमित्तत्वं सूपपन्न-मेव नितरामेव परम्परासम्बन्धेन पशुत्वपचत्वादेः । वाच्य-वृत्तित्वे सतीत्यस्य परमार्थस्तु तत्तत्पदवाच्यत्वानुमापकत्वे सति वाच्यमात्रवृत्तित्वरूपव्याप्तिप्रदर्शनेन तन्नाभात् । घ-टत्वकम्बुग्रीवोभयस्य घटत्वरूपव्याप्यान्तरघटिततया ना-नुमापकता केवलकृतेश्च व्यभिचारितया । एतेन स-त्पदवस्त्वादिपदवाच्यतावदितरावृत्तित्वाप्रसिद्धावपि न तत्र तत्र प्रवृत्तिनिमित्तत्वलक्षणाव्याप्तिः । अथ दिक्कृतविशे-षणतया घटाद्यनुयोगिकताद्दृश्यविशेषणतया वाकृतेर्घटादि

पदवाच्यवृत्तितयातिव्याप्तिवारणार्थं तत्तत्पदवाच्यतावच्छे-
दकतावच्छेदकसम्बन्धेन वाच्यवृत्तित्वं विवक्षणीयम्। ए-
वञ्च गगनादिपदवाच्यताया निरवच्छिन्नतया तदवच्छेदक-
तावच्छेदकसम्बन्धाप्रसिद्धैव शब्दादौ गगनपदप्रवृत्तित्वस्य
सहजत एव वारणाद् व्यर्थं वाच्यत्वे सतीति विशेषणमि-
ति चेन्न । तत्तत्पदसङ्केतीयविशेष्यतावच्छेदकतावच्छेद-
कसम्बन्धेनैव वाच्यसम्बद्धताया अनुमापकताया वा निवे-
शनीयत्वान्नतु वाच्यतावच्छेदकतावच्छेदकतावच्छेदकसम्ब-
न्धेनापि यथासन्निवेशवैयर्थ्यानवकाशात्। नच जन्यद्रव्या-
णां दिक्त्वं कालत्व ञ्चानाङ्गीक्रियत इति सम्बन्धविशेष-
निवेशोवायसदन्तानुधावनसमान इतिवाच्यम्। तावतापि
घटादीनां महाकाले महादिशि च वर्त्तमानानामवच्छेद-
कतया तादृशावच्छेदकत्वरूपवृत्तिनियामकसाक्षात्सम्बन्धेना-
क्षरैर्घटादिषु सत्ताया अनपायात् । निरुक्तावच्छेदकत्व-
स्य वृत्तिनियामकतायाः प्रतियोगिवैयधिकरण्यविचारावस-
रे सिद्धान्तलक्षणे जगदीशेन स्वहस्तितत्वात् । केचित्तु स्वा-
श्रयसमवेतत्वातिरिक्तभगवत्सङ्केतीयविशेष्यतावच्छेदकता -
वच्छेदकसम्बन्धेन वाच्यवृत्तित्वे सतीत्यर्थपर्य्यवसानेन य-
थाश्रुतमेव सम्यगित्याहुः । जात्याकृतिव्यक्तयः पदार्था
इतिसूत्रेण यद्यत्पदानां वाच्यो लक्षितस्तत्तत्पदानामेव
प्रवृत्तिनिमित्तपरोऽयमेवञ्च पक्षपदप्रवृत्तिनिमित्ते सकर्म्मक-
धातुप्रवृत्तिनिमित्तेषु चैतल्लक्षणागमनं न दोषाय, तेषामे-
तल्लक्षणालक्ष्यत्वात् । समवेतत्वसम्बन्धस्य वृत्तिनियामकत्वे-
न साक्षात्त्वेनच पशुत्वे लक्षणगमनं सम्भवति । वस्तुतस्तु
जात्याकृतीतिसूत्रार्थतया पशुप्रभृतिकं न प्राप्तमतः पशुप-

दप्रवृत्तिनिमित्तं नैतल्लक्षणलक्ष्यम्। एवञ्च वाच्यवृत्तित्वे सती-त्यत्र वृत्तित्वं साक्षात्सम्बन्धेनेति गदाधरलिखनं यथाश्रुतमित्र सम्यक् इत्यपिकश्चित्। प्रवृत्तिनिमित्तशब्दो योगरूढ़ एव। यो-गार्थस्तु प्रकृष्टाया वृत्तेः शक्ते र्निमित्तं ज्ञापकत्वरूपहेतुत्वंव-त्, तथाच निरूपकत्वसम्बन्धावच्छिन्नशक्तिविषयिकानुमि-तिर्वाच्यतानुमितिरितिपर्य्यवसितम्, लिङ्गविधया तत्प्रयो-जकमेतदर्थे यौगिकम्, वाच्यत्वे सति वाच्योपस्थितिप्रका-र एतदर्थे रूढ़ञ्च। अथवा प्रकृष्टा वृत्तिर्यस्येति विषय-त्वार्थकषष्ठीपदघटितविग्रहार्थकबहुव्रीहिरेव प्रवृत्तिपदं, त-थाच प्रवृत्तिविषयिका याऽनुमितिस्तस्या निमित्तं कारण-मित्यर्थः, ज्ञायमानलिङ्गस्यानुमितिकारणत्वम्, सामान्यतो वृत्तित्वस्य शाब्दोपयोगिलक्षणादिसाधारण्येऽपि प्रकृष्टवृत्ति-त्वस्य शक्तिमात्रावस्थायितया प्रवृत्त्यनुमितेः शक्त्यनुमिताबे-वपर्य्यवसानमिति भावः। कथञ्चिद्वैशिष्ट्यादिरूपेण क-म्बुग्रीवादिव्यक्तेरनुमापकत्वसम्भवेऽपि अनुमापकतायां वैशि-ष्ट्यानवच्छिन्नत्वं निवेश्य तद्व्यावृत्तिः कार्य्या। इत्यलमति विस्तरेण॥

रामरावणादिपदेभ्यो विना लक्षणया शाब्दनिर्वा-हार्थं प्रमेयत्वादिसामान्यधर्म्मप्रकारेण सामान्यलक्षणप्रत्यास-त्तिमूलकनिखिलप्रमेयप्रकारकबोधजन्यसंस्कारेणोद्बोधकव्य-क्तिविशेषसहकारेणच प्रमेयत्वांशं प्रमुष्य स्वरूपतो रामत्वा-दिजातिप्रकारकस्मरणसम्भवेन तद्वच्छिन्नविषयकशक्तिग्रहः सुसम्पद्यत इति केषाञ्चिन्मतम्, तदुपरि गदाधरोक्तप्रथम-दोषो यथा, तद्विषयकस्मृतिं प्रति तद्विषयकसंस्कारत्वेनैव हेतुत्वसम्भवे विशिष्यताप्रकारताविशेषमन्तर्भाव्य स्मृतिसंस्का-

रयोः कार्य्यकारणभावस्य सम्प्रदायानुमतस्य वैफल्यापत्ति-रिति। न च तद्विषयकस्मृतिं प्रति तद्विषयकसंस्कारस्य हेतुत्वमित्यपि कथं, स्मृतिसामान्यं प्रति संस्कारत्वेन हेतुतास्वीकारेणैव चरितार्थत्वसम्भवात्। यस्य पुंसो यद्विषयकसंस्कारो न जातस्तस्योद्बोधकव्यक्तिविशेषानङ्गीकारेणैव तदानीं तद्विषयकस्मृत्यनुत्पादसम्भवाद् उद्बोधकानां फलोन्नेयत्वादितिवाच्यम्। अनुगतोद्बोधकस्थले विषयविशेषसंस्कारविधुरस्यापि पुंसस्तादृशानुगतोद्बोधकबलात् तत्तद्विषयकस्मरणापत्तिवारणार्थं तत्तद्विषयकत्वेन स्मृतिसंस्कारयोः कार्य्यकारणभावस्यावश्यकत्वात्। वस्तुत इत्यादिना प्रमोषस्वीकर्तृमतोपरि द्वितीयदोषो दर्शितो यथा, अनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकज्ञानं विना स्वरूपतस्तत्प्रकारकसंस्कारानुत्पत्त्या स्वरूपतस्तत्प्रकारकस्मरणमपि न जनितुमीष्टे। अतः स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकसंस्कारस्यैव हेतुत्वमावश्यकम्, एवञ्च व्यभिचारप्रसक्त्या प्रमेयत्वादिरूपेण घटत्वादिप्रकारकसंस्कारस्य फलं स्वरूपतो घटत्वादिप्रकारकस्मरणं नहि भवितुमर्हतीति वस्तुतस्त्वित्यादिग्रन्थाशयः। अत्र नवद्वीपस्थोमाधवतर्कसिद्धान्तः, प्रकारताविशिष्यते अनन्तर्भाव्य केवलतद्विषयकत्वमन्तर्भाव्य च स्मृतिसंस्कारयोः कार्य्यकारणभावो नहि सम्भवति, तथासति घटत्वेन घटविषयकात् प्रमेयत्वेन घटविषयकाच्च समूहालम्बनसंस्कारात् स्वरूपतो घटत्वप्रकारतानिरूपितघटनिष्ठविशेष्यताशालिस्मृतित्वावच्छिन्नस्यानुगतोद्बोधकसम्वलनदशायां स्वरूपतो घटत्वप्रकारकघटविशेष्यकयथार्थस्मरणापत्तिर्दुर्वारैव, अतस्तदापत्तिवारणा-

य तत्तद्धर्म्मिनिष्ठप्रकारतानिरूपिततत्तधर्म्मिनिष्ठविशेष्यताक-स्मृतिसंस्कारयोः कार्य्यकारणभावो ऽवश्यं स्वीकर्त्तव्यः सूक्ष्मविवेचनया प्रकारतायां सम्बन्धनिवेशोऽप्यास्तामित्यवधत्। एवं सत्यपि स्मृतिसंस्कारकार्य्यकारणतावच्छेदकघटकप्रकारत्वयोर्निरवच्छिन्नत्वनिवेशव्यावृत्तेर्दुर्लभतया रामरावणादिपदेभ्यः शक्त्यैव शाब्दनिर्वाहस्य सुसम्पन्नत्वेन लक्षणयैव तादृशशाब्दव्यवस्थापने कापि युक्तिर्न दृश्यते, इत्यञ्च तर्कसिद्धान्तोऽसौ मनसि किं कृत्वा वाग्विस्तारमकरोत् तत्तत्त्वं स एवावगच्छतिस्म। इति चेन्न, यतो जातित्वरूपेण जातिप्रकारकस्मृतौ शुद्धघटत्वप्रकारेण स्मृतौ चानुगतरूपेण यादृशोद्बोधकानि कारणानि स्युस्तादृशोद्बोधकसम्वलनदशायां केवलजातित्वप्रकारेण जातिप्रकारकासमूहालम्बनसंस्कारान्नियमतो जातित्वरूपेण घटत्वादिप्रकारकस्य स्वरूपतो घटत्वप्रकारकस्यच समूहालम्बनस्मरणस्यापत्तिर्वारयितुमशक्या स्याद्यदि स्वरूपतस्तत् प्रकारकस्मरणे स्वरूपतस्तत्प्रकारकसंस्कारस्यापि पृथक्कारणत्वकल्पनं न स्यात्। नच तादृशासमूहालम्बनसंस्कारादप्युक्तसमूहालम्बनस्मरणं प्रमोषस्वीकर्त्तृभिरिष्टमेव। ननुगतोद्बोधकजनितशुद्धरामत्वादिप्रकारकस्मृतिस उक्तानुगतोद्बोधकजन्यस्मृतेः कियतोऽपि विशेषस्यानुभवेनाविषयीकरणात्। नहि कथामात्रमनुभवं साधयितुं प्रभवतीति वाच्यम्। अत्र विशेषात्, तथाहि असमूहालम्बसंस्कारेण केवलेन समूहालम्बनस्मरणं न केऽपि स्वीकुर्व्वन्ति, एवञ्च स्वरूपतस्तत्प्रकारकस्मरणं प्रति स्वरूपतस्तत्प्रकारकसंस्कारत्वेन पृथक् कारणत्वास्वीकारे उक्तापत्तिर्वज्रलेपैव स्या-

त्। केचित्तु सर्व्वेषां जीवानां प्रत्येकशरीरावच्छेदेन स्वरूपतो भानयोग्यनिखिलधर्म्मनिष्ठनिरवच्छिन्नप्रकारताकस्मरणं न प्रामाणिकम्, कियन्तो निविड़काननाद्यवस्थायिलताप्रभृतिकं साचात्कृत्य तन्मूलकसंस्कारात् कदाचिदनुगतोद्बोधकसहकारेण कदाचिच्चाननुगतोद्बोधकसहकारेणवा स्मरन्ति। कियन्तो वानुगतोद्बोधकसम्पातेऽपि तादृशविशेषसंस्कारविधुराः प्रमेयत्वादिसामान्यलक्षणया तत्प्रकारेण निखिलधर्म्मावच्छिन्नविषयकसंस्कारवन्तस्तादृशलताविशेषादिकं विशेषरूपेण स्मर्त्तुं न प्रभवन्तीत्युत्सर्गतो दृष्टत्वात्। एवञ्च स्वरूपतस्तत्तत्प्रकारकसंस्कारशून्यानामनुगतोद्बोधकमात्रवलेन सामान्यधर्म्मप्रकारेण संस्कारान्निरवच्छिन्नतत्तन्निष्ठप्रकारताकस्मरणापत्तिवारणार्थं निरवच्छिन्नतत्प्रकारकस्मरणे निरवच्छिन्नतत्प्रकारकसंस्कारस्यैव हेतुत्वं सर्व्वैरेव स्वीकार्य्यमित्येव गदाधरग्रन्थाभिप्रेतमित्याहुः। इदमत्रावधेयम्, अतीन्द्रियमनस्त्वपापत्वपुण्यत्वादीनां शाब्दे स्वरूपतः प्रकारतासम्पादनार्थं मोषेण स्मरणस्वीकर्त्तृमतमनुगतोद्बोधकस्थलानुरोधेन स्वरूपतस्तत्तत्प्रकारकस्मरणे स्वरूपतस्तत्तत्प्रकारकसंस्कारस्य हेतुतावश्यकत्वं प्रदर्श्य गदाधरेण दूषितम्, तन्न सङ्गच्छते गदाधरमते स्वरूपतोऽतीन्द्रियप्रकारकस्मरणस्यालीकतया तादृशस्मरणेऽनुगतोद्बोधकानुसन्धानस्याकाशकुसुमकारणानुसन्धानसमानत्वात्। अथातीन्द्रियेष्वपि योगिनां प्रत्यक्षविषयत्वसत्त्वेन तेषां स्वरूपतस्तत्तत्प्रकारकस्मरणस्य सर्व्वसम्मततयोद्बोधकानामनुगतरूपेण कारणत्वं भवितुमर्हति। एवञ्च तेषां कदाचिदनुगतोद्बोधकसम्पाते द्विविधमुख्यविशेष्यताशालिसंस्कारासहृ-

त्तात् प्रमेयत्वादिप्रकारेण घटत्वाप्रकारकसंस्कारात् प्रागुक्तसमूहालम्बनस्मरणापत्तिदान एव गदाधरग्रन्थतात्पर्य्यम्। एतेनानुगतोद्बोधकानां योगजन्यतावच्छेदकवैजात्यघटितधर्म्मेण कारणत्वमुपगम्यास्मदादीनां निरुक्तसमूहालम्बनस्मरणापत्तिवारणसम्भवेऽपि न निस्तार इति चेत्, योगिनामनुगतद्विविधोद्बोधकसम्पाते किं नियमतो निरुक्तसमूहालम्बनस्मरणं न स्याद् यतः कस्मिन्नपि संस्कारे न कदाचिदपि योगिनां दुर्भिक्षता वृत्ता। न च रामत्वरावणत्वादिजातिसाक्षात्कारिणां प्राचीनानां तत्तत्प्रकारेण स्वरूपतः स्मरणस्य प्रसिद्धत्वान्निरुक्तानुगतोद्बोधकवलेनास्मदादीनामपि पूर्व्वोक्तसमूहालम्बनस्मरणापत्तावेव ग्रन्थतात्पर्य्यमितिवाच्यम्, तथा सत्यपि तादृशस्थले कथञ्चिदापत्तिभयेन प्रमोषेण स्मरणाजननेऽप्यतीन्द्रियधर्म्माणां स्वरूपतः प्रकारतानिर्वाहार्थं प्रमोषस्वीकारः साधुसङ्गत एव। परन्तु बुद्धिप्रकारावच्छिन्नविषयकसंस्कारात् प्रकारत्वांशं प्रमुष्याप्रतीतधर्म्मनिष्ठनिरवच्छिन्नप्रकारताकस्मरणस्य तदादिपदधर्म्मिकशक्तिज्ञानरूपोद्बोधकसहकारेण जननव्यवस्थापने प्रमोषवादिनामभिमानो न सुधियां सन्तोषाय, तत्र प्रमोषस्वीकारे घटोऽस्ति तमानयेत्यादिवाक्यस्थतत्पदधर्म्मिकशक्तिज्ञानात् स्मृतौ स्वरूपतोघटत्वप्रकारकघटमुख्यविशेष्यताकत्ववत् पटस्मरणजनकानुगतोद्बोधकसम्पाते पटसंस्कारासत्त्वे च पटमुख्यविशेष्यकत्वापत्तेर्दुर्व्वारत्वात्। पूर्व्वोक्तयुक्त्या तदानीं समूहालम्बनस्मरणस्वीकारासम्भवात्।

अथ रामरावणादिपदेभ्यो लक्षणया तत्पदप्रतिपाद्यत्वादिरूपयथाकथञ्चिद्धर्म्मेणाधुनातनवाक्यार्थोपपत्तावपि रा-

मादिकं साक्षात्कृतवता वाल्मीकिना रामादिगतवैजात्य-
बोधतात्पर्य्येणैव प्रयुक्तरामायणवाक्यान्निरुक्तप्रतिपाद्यत्वा-
दिना कथमिदानीन्तनानां तात्पर्य्यभ्रमशून्यानां शाब्दबो-
धोपपत्तिः सम्भवति, कथम्वा एतत्काले रावणो नास्ती-
त्यादिवाक्यार्थोपपत्तिः । लक्षणया तादृशबोधस्वीकारे प्र-
थमे वक्तृतात्पर्य्यप्रमाया असत्त्वं, वक्तृतात्पर्य्यानुपपत्तेरेव
लक्षणाकल्पकत्वात् । द्वितीयेतु रावणपदप्रतिपाद्यत्व-
रूपसामान्यधर्म्मस्येदानीन्तनपुरुषेऽपि सत्त्वेन तादृशसामा-
न्यधर्म्मावच्छिन्नाभावस्यैतत्काले बाधितत्वेनच तादृशवा-
क्यस्य प्रामाण्यं कथमप्युपपादयितुं न शक्यते, एवं हरिं
स्मरेदित्यादिवाक्यार्थं प्रतीत्य परमेश्वरस्मरणे प्रवृत्तिर्नस्या-
त्, हरिपदप्रतिपाद्यत्वरूपसामान्यधर्म्मस्य भेकादिसाधार-
णत्वेनानुपादेयतया तदवच्छिन्नविषयकस्मरणे प्रवृत्त्युपयो-
गीष्टसाधनताज्ञानासम्भवात् । नच प्रकरणादिना तादृ-
शसामान्यधर्म्मेण विशिषे तात्पर्य्यमवधार्य्य भवत्येव प्रवृत्ति-
रितिवाच्यं, तथा सति प्रमेयं स्मरेदित्यादिवाक्यादपि प्रवृ-
त्त्यापत्तेर्वारयितु मशक्यत्वादितिचेन्न, यतस्तत्तत्स्थले तत्त-
त्पदप्रतिपाद्यत्वेन न लक्षणा वक्त्रनुमता परन्तु यथासम्भवं
नवनीरदश्यामत्वपरमकारुणिकत्वादिलक्षणविलक्षणधर्म्मादि-
ना दशवदनत्वादिनाच लक्षणायाः स्वीकारेण सर्व्वोपप-
त्तिसम्भवात् । नच वाल्मीकिप्रभृतिना रामत्वादिजातेः
साक्षात्कृतताया लक्ष्यार्थतात्पर्य्येण प्रयोगकल्पनमयुक्तमिति-
वाच्यं, परमकारुणिकानां वेदपुराणादिकर्तॄणां संसारे उत्तरो-
त्तरजायमानपुंसमुदायस्य वेदादिकमाकर्ण्य प्रवृत्तिनिर्व्वाहार्थं
दर्शितधर्म्मप्रकारेण शाब्दबोधनिर्व्वाहार्थञ्च लक्ष्यार्थतात्पर्य्ये-

णा वेदादिप्रयुक्तेरावश्यकत्वादन्यथा धर्म्मानुष्ठाने प्रवृत्तेर्निषिद्धकर्म्मणि निवृत्तेश्च प्रायश: सर्व्वेषां विलोप: स्यादिति शास्त्रविदा पर्य्यालोचित: पन्था: । इदमत्रावधेयम्, हरिं स्मरेदित्यादिसाक्षाद्विधिवाक्यस्थहर्य्यादिपदेन लक्षणास्वीकार: कथमपि न भवितुमर्हति, विधिवाक्यघटकपदेषु लक्षणाकल्पनाया मीमांसकवाक्यविरुद्धत्वात्, यथा तद्वाक्यम्, स्तुतिर्हि अनुवादकत्वाद् यथाप्राप्तलक्षणां सहेत, न विधिरपूर्व्वार्थकत्वादिति । एवञ्च मोषेण स्मरणस्वीकर्त्तृमतमेवसाधीय: । गदाधरसमाधानसौष्ठवन्तु नावधारयितुं प्रभवाम: । उक्तवाक्यमर्य्यादारक्षार्थं पुनरनुगतोद्बोधकानां सङ्कोचश्च स्मृतिकारणत्वमभ्युपगम्यतामित्यास्तां ।

विधेयव्याप्योद्देश्यतावच्छेदकधर्म्मवान् सर्व्वपदार्थ इतिकल्पे घटत्वत्वाद्यनुपस्थितिदशायां सर्व्वे घटारूपवन्त इत्याकारकनिश्चयस्य विपरीतज्ञानसामान्याविरोधितापत्तिरूपदोषो गदाधरेण प्रदर्शित:। अथ किमाकारकं विपरीतज्ञानम्, अत्र नवद्वीपस्थौ माधवतर्कसिद्धान्तस्तत्कृतशक्तिवादव्याख्यानुवादकृद् हरिनाथतर्कसिद्धान्तश्च विपरीतज्ञानं घटत्वं रूपवद्व्यापंत्र नवेत्याद्याकारकमेव, तथाच सर्व्वपदाज्जायमाने सर्व्वे घटा रूपवन्त इत्याकारके घटत्वांशे निर्धर्म्मितावच्छेदककरूपवद्व्याप्तिप्रकारकनिश्चये घटत्वं रूपवद्व्यापत्रमित्याकारकज्ञानाविरोधित्वापत्तिरेव ग्रन्थकृदभिप्रेतेति प्रलपितवन्तौ। तच्चातीव हास्यास्पदं यत: सर्व्वे घटारूपवन्त इत्यादिवाक्यजन्यनिश्चये घटत्वं रूपवद्व्यापंत्र नवेत्याद्याकारकज्ञानप्रतिबन्धकत्वं केऽपि नाङ्गीकुर्व्वन्त्यतोनिरुक्तज्ञानाविरोधित्वमिष्टमेव । एवं सर्व्वे घटा रू-

पवन्त इत्याकारकनिश्चये प्रतिबन्धकत्वसम्पादनार्थमुद्देश्य-
तावच्छेदकव्यापकत्वस्य विधेयान्वयिनः सर्व्वपदार्थता स्वी-
कृता। तावता किं घटत्वं रूपव्याप्यं नवेति ज्ञानं प्रति
प्रतिबन्धकत्वसत्त्वमायातम्। नच ग्रन्थकारस्य घटत्वं तद्-
व्याप्यं नवेत्याकारकंज्ञानं प्रत्येव प्रतिबन्धकज्ञानविषयः स-
र्व्वपदार्थ इति नाभिप्रेतम्, परन्तु यत्किञ्चिद्व्यभिचारज्ञा-
नविरोधिज्ञानविषय एव सर्व्वपदार्थ इत्येव ग्रन्थकृदभिप्रे-
तम्। एवञ्च सर्व्वपदस्य निरुक्तव्यापकत्वार्थकत्वे रूपवान्
स्वरूपतो घटत्वव्यापकोनवेत्याकारकव्यभिचारज्ञानं प्रति रू-
पवद्धर्म्मिकघटत्वव्यापकत्वनिश्चये प्रतिबन्धकत्वस्य सर्व्वानुम-
तत्वेन निरुक्तव्यापकत्वघटितसर्व्वपदार्थो युज्यत एवेति वा-
च्यं, यत्किंचिद्व्यभिचारज्ञानप्रतिबन्धकज्ञानविषय एव स-
र्व्वपदार्थ इति नियमवादस्य मन्त्रपाठतुल्यत्वात्। ग्रन्था-
र्थतत्त्वविदस्तु सर्व्वे घटा रूपवन्त इत्याकारकनिश्चयोहि घ-
टत्वसामानाधिकरण्येन रूपवद्भेदबुद्धिं विरुणद्धि, अत्र स-
र्व्वेषामेवाविवादः। एवञ्च यादृशार्थे सर्व्वपदस्य शक्ति-
स्वीकारे तादृशप्रतिबध्यप्रतिबन्धकभाव उपपादयितुं शक्य-
ते, तादृशपदार्थ एव सर्व्वपदशक्यत्वमवश्यं स्वीकर्त्तव्यं, त-
थाच सर्व्वे जातिमन्तो भावत्ववन्त इत्यादौ जातिसामाना-
धिकरण्येन भावभेदबुद्धौ सर्व्वे घटत्ववन्तो रूपवन्त इत्यादौ
घटत्वत्वरूपेण घटत्वसामानाधिकरण्येन रूपवद्भेदबुद्धौच
जातिर्भावत्वव्याप्या घटत्वं रूपवद्व्याप्यमित्याकारकसर्व्व-
पदार्थविषयकनिश्चयस्य प्रतिबन्धकत्वं सूपपद्यत एव, अ-
भिमतधर्म्मितावच्छेदकसामानाधिकरण्येनाभावबुद्धौ प्रति-
योगिनि तादृशधर्म्मितावच्छेदकव्यापकतानिश्चयस्येव ता-
दृशधर्म्मितावच्छेदके प्रतियोगिव्याप्यत्वनिश्चयस्यापि प्रतिब-

न्धकताया: सर्व्वसम्मतत्वात्। परन्तु घटत्वत्वाद्यनुपस्थिति-
दशायां घटत्वे निर्धर्म्मितावच्छेदकव्याप्तिनिश्चय: स्वरू-
पतो ऽस्वरूपतोवा भासमानघटत्वसामानाधिकरण्येन रू-
पादिमद्भेदबुद्धौ प्रतिबन्धक: कथमपि भवितुं नार्हति। ए-
तद्दोष एव ग्रन्थकृतस्तात्पर्य्यमतएवैतद्दोषोद्धारार्थमग्रे सर्व्व-
पदस्य व्यापकत्वार्थकत्वनिर्व्वचनमपि साधुसङ्गतं, स्वरूप-
तो भासमानघटत्वघटितव्यापकत्वस्य रूपवन्निष्ठस्य निश्चये
घटो न रूपवानित्याकारकबुद्धिं प्रति विरोधित्वस्य सर्व्व-
सम्मतत्वादितिप्राहुरित्यास्तां विस्तर:। सर्व्वे घटा वर्त्तन्त
इत्यादौ क्रियारूपविधेये सर्व्वपदार्थस्यान्वये तत्पदस्यैक-
वचनान्ततापत्तेर्नपुंसकत्वापत्तेश्चेति गादाधरी। अथ स-
र्व्वत्र तिङर्थाश्रयत्वादेरेव विधेयताया: सर्व्वैरेव व्यवस्था-
पिततया कथं क्रियायां विधेयत्वं प्रदर्शितं, नच विभक्ते-
र्निरर्थकत्वमते इदमुक्तं, तन्मते घटादिरूपनामार्थवर्त्तनरू-
पक्रिययोरेवोद्देश्यविधेयभावेनान्वयस्यावश्यकत्वादिति वा-
च्यम्। स्वादिविभक्तीनां निरर्थकताया मतविशेषे दृष्टत्वे-
ऽपि तिङविभक्तीनां तथात्वस्य कुत्राप्यदृष्टचरत्वात्। एवं
तासां निरर्थकतामतविशेषो यद्यस्त्यास्तां किन्त्वेतद्विचार-
प्रस्तावे नामार्थधात्वर्थयोर्भेदान्वयानङ्गीकार:, सर्व्वपदस्य
व्यापकत्वार्थकत्वे क्रियायां तस्य भेदान्वयानुपपत्तिर्नामार्थ-
धात्वर्थयो र्भेदान्वयस्याव्युत्पन्नत्वा दितिप्रतीकेन सुव्यक्तं ग-
दाधरेण सूचित:। एवञ्च विभक्तीनां निरर्थकत्वे ओदनं
पचति देवदत्त: सर्व्वे घटा वर्त्तन्त इत्यादौ सर्व्वत्रैव क्रिय-
या सह नामार्थस्यानन्वयप्रसङ्गो वज्रलेप एव। नच वि-
भक्तिसमभिव्याहारं विना तादृशान्वयबोधो न स्वीक्रियते
नयिमोऽपि सङ्कोच्यतामिति वाच्यं, तथासति सर्व्वपदस्य-

द्धौ नियमसङ्कोचेन भेदान्वयोपपत्तिसम्भवेन गदाधरदूषणस्यासङ्गत्यापत्तेः। तस्मान्नियमसङ्कोचो गदाधरस्यानभिप्रेत इत्येवायातमितिचेन्न, यतः क्रियाविशिष्टतिङर्थप्रकारकान्वयबोधस्थले धर्म्मिपारतन्त्र्येण स्वाश्रयाश्रयत्वसम्बन्धेन क्रियायामपि स्वातन्त्र्येण तिङर्थस्य साक्षात्सम्बन्धेन नामार्थविशेष्यकान्वयवत् प्रकारविधया नियमतोऽन्वय इति सिद्धान्तः। अन्यथा द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्त्ववन्नतु गुण इति प्रतीतिः कथमपि नोपपद्यते, अनुमितिग्रन्थे गदाधरेणैतदेव प्रदर्शितम्। एतावतैतदायातं, स्वातन्त्र्येण नामार्थयोर्नामार्थधात्वर्थयोश्च भेदान्वयो ऽप्रामाणिकः, पारतन्त्र्येण च तयोर्भेदान्वयस्य स्वीकार आवश्यकः। अन्यथा द्रव्ये उक्तविशिष्टवैशिष्ट्यबोधस्थले स्वाश्रयाश्रयत्वरूपभेदसम्बन्धेन गुणकर्म्मान्यत्वरूपनामार्थस्य द्रव्ये धर्म्मिणि पारतन्त्र्येण भानविलोपः स्यात्, तद्वदत्रापि वर्त्तनरूपक्रियानिरूपिततिङर्थाश्रयत्वं साक्षात्सम्बन्धेन विधेयतया वर्त्तनरूपक्रियाच स्वाश्रयाश्रयत्वसम्बन्धेन विधेयतया भासते, अतस्तद्द्वयमेवैकधर्म्मिविधेयमन्यथा द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्तावदित्यादावगतिः स्यात्। नच गुणानांच परार्थत्वादसम्बन्धः समत्वात् स्यादितिसूत्रेण विधेयद्वयबोधतात्पर्य्येणैकवाक्यतानिषेधः प्रतिपाद्यत इति कथं सकृदुच्चरितवाक्याद् विशिष्टवैशिष्ट्यबोधस्थले विधेयद्वयप्रतीतिसम्भव इतिवाच्यम्, विधिवाक्यस्थले इष्टसाधनत्वस्य कार्य्यत्वस्यच द्वयोर्विधेयत्वेऽप्येकवाक्यतास्वीकारमाणिकृता मौलिकनियमस्य परित्यक्तत्वात्, स्वातन्त्र्येणान्वितानां विधेयताद्वयनिषेधपरतया सूत्रस्योपपादयितुं शक्यत्वाच्च, एतदभिप्रायेणैव क्रियायामपि विधेयत्वमुक्तं गदाधरेण।

अथपारतन्त्र्येण विधेयभावापन्ने सर्व्वपदार्थान्वय-माशङ्क्य परमतदूषणं गदाधरस्यानुचितं, स्वातन्त्र्येणान्वित-तिङर्थ एव सर्व्वपदार्थान्वये परेषामभिप्रायोऽस्तु, तावता न सर्व्वपदस्य नपुंसकत्वाद्यापत्तिदोषः सम्भवतीति चेन्न, तिङर्थेऽभेदान्वयस्य प्रकारविधया नामार्थान्वयस्यचाव्युत्पन्नत्वा-दतएव विभुर्गुणो गच्छति जातिर्गच्छतीत्यादिवाक्यानां न प्रामाण्यमन्यथा कृतिरूपतिङर्थे गुणाभेदस्या बाधितत्वेन त-त्र समवायसम्बन्धेन जातेरबाधितत्वेनच तत्तद्वाक्यानां प्रा-माण्यापत्तिर्वारयितुं न शक्यते। नच ग्रामकर्म्मत्वं गच्छ-तीत्यत्र कर्म्मत्वे ग्रामस्याबाधितत्वेऽपि यथा शाब्दसामान्य एव तादृशवाक्यस्य निराकाङ्क्षत्वं, तथोक्तवाक्यद्वयस्यापि शा-ब्दसामान्य एव निराकाङ्क्षत्वं स्वीक्रियतामितिवाच्यम्, गुणे जात्यादौच गतिकर्त्तृत्वभ्रमवतां तादृशवाक्यादपि शाब्दा-नुरोधेन तत्तद्वाक्यस्य शाब्दोपयोगिकसाकाङ्क्षतास्वीकाराव-श्यकत्वादित्यास्तां विस्तरः॥

सर्व्वे घटारूपवन्त इत्यादौ सर्व्वपदस्योद्देश्यताव-च्छेदकव्यापिका विधेयव्याप्या या पर्य्याप्तिस्तत्प्रतियोगि-धर्म्मावच्छिन्ने शक्तिरिति गदाधरेणोक्तम्, यावत्त्वस्य धी-विशेषविषयत्वरूपस्य विषयव्यक्तिभेदेन भिन्नत्वेन धीवि-शेषस्याननुगततया निखिलयावत्त्वानामनुगतशक्तिनिर्वचना-सम्भवभियाच धीविशेषविषयत्वरूपयावत्त्वस्य पर्य्याप्तिव्य-क्तेरैक्येन निखिलपर्य्याप्तिगतपर्य्याप्तित्वरूपानुगतधर्म्मस्वी-कारेणचोभयावृत्तिधर्म्मरूपेण व्यापकत्वनिर्व्वचनं तादृश-पर्य्याप्तित्वेन सामान्यतः शक्तिनिर्वाहश्च सम्भवति। अ-थतादृशपर्य्याप्तिमत्स्वेव यावत्पदस्य शक्तिरस्तु किं ता-दृशपर्य्याप्तिप्रतियोगिरूपगुरुधर्म्मावच्छिन्नेष्विति चेन्न, उद्देश्य-

तावच्छेदकव्यापकेत्यादेः स्वार्थान्वयितावच्छेदकव्यापकेत्या-र्थ्य एव पर्य्यवसानेन सर्व्वेगुणाद्रव्येष्विति वाक्यस्य प्रामाण्यवद् द्रव्याणि सर्व्वगुणवन्तीत्यादिवाक्यस्यापि प्रामाण्यापत्तेः, पर्य्याप्तेर्व्यासज्यवृत्तित्वेन तादृशपर्य्याप्तिमतो गुणस्य द्रव्येष्ववाधात्। अस्माकन्तु तादृशपर्य्याप्तिप्रतियोगिनो यावत्त्वस्य व्यासज्यवृत्तित्वेन प्रकृते तदवच्छिन्नाधिकरणताया अप्रसिद्धतया नोक्तवाक्यस्य प्रामाण्यं, तदवच्छिन्नाभाववति तदवच्छिन्नप्रकारकशाब्दप्रयोजकत्वेन तद्वाक्यस्याप्रमाणत्वात्।

अथोद्देश्यतावच्छेदकव्यापकं यद्विधेयं तत्समानाधिकरणपर्य्याप्तिकधर्म्मावच्छिन्नं यावत्पदस्य लाघवाच्छक्तिरस्तु, उक्तरीतिमवलम्ब्य विधेयव्याप्यत्वनिवेशनं केवलान्वयिविधेयस्थले तदभाववदवृत्तित्वरूपव्याप्तेरप्रसिद्धिमाशङ्क्य व्यभिचारित्वरूपपरम्परायाः संसर्गत्वस्य विवादास्पदस्यापि निवेशनेन तस्या वृत्त्यनियामकत्वेऽपि तत्सम्बन्धावच्छिन्नप्रतियोगित्वस्वीकरणेनच शक्तिनिर्वचनमत्यन्तमसङ्गतमेव। नच व्यभिचारित्वस्य संसर्गत्वं वृत्तिनियामकत्वं च सर्व्वसम्मतमेव, हेतावुपाधिर्वर्त्ततेऽयं हेतुः सोपाधिरुपाधिमांश्चेति व्यवहारादितिवाच्यं, तादृशव्यवहारस्य सन्दिग्धत्वात्। अन्यथा साध्याभाववदवृत्तित्वरूपव्याप्तेरुक्तरीत्या परिष्कारसम्भवे केवलान्वयिन्यव्याप्तेरितिमूलासङ्गतेर्व्यापकसामानाधिकरण्यरूपगुरुतरव्याप्तिनिर्वचनासङ्गतेश्चेतिचेन्न, यत उद्देश्यतावच्छेदकव्यापकेत्यादेः स्वार्थान्वयितावच्छेदकव्यापका स्वार्थान्वयितावच्छेदकावच्छिन्नान्वयितावच्छेदकावच्छिन्न-व्याप्या या पर्य्याप्तिस्तद्घटितार्थ एव शक्तेः पर्य्यवसानं गदाधरग्रन्थेन प्रत्याय्यते, एवञ्च सर्व्वे गुणा द्रव्येषु वर्त्तन्ते

इतिवाक्यस्य प्रामाण्यवद् द्रव्याणि सर्व्वगुणवन्तीति वाक्यस्यापि प्रामाण्यापत्तिर्दुर्व्वारैव । निरुक्तव्याप्यत्वमपहायोक्तरीत्या सामानाधिकरण्यप्रवेशे एकैकद्रव्यमात्रवृत्तिगुणचतुष्टयादिमात्रगतयावत्त्वस्य पर्य्याप्तेरपि गुणत्वव्यापकद्रव्याधेयत्वसमानाधिकरणपदेन प्राप्ततया तादृशयावत्त्वावच्छिन्नवत्त्वस्य प्रतिद्रव्यं प्रसिद्धत्वेनच द्रव्याणि सर्व्वगुणवन्तीतिवाक्यजन्यशाब्दबोधे तादृशयावत्त्वावच्छिन्नवति तादृशधर्म्मावच्छिन्नप्रकारकत्वरूपप्रमात्वाच्चेति । अस्माकन्तु निखिलगुणगतयावत्त्वपर्य्याप्तेरेव गुणत्वव्यापकत्वं द्रव्याधेयत्वव्याप्यत्वञ्चेतदुभयरूपेण प्राप्ततया निरुक्तगुणसाधारणतादृशयावत्त्वावच्छिन्नवत्त्वस्याप्रसिद्धतया च तादृशवाक्यस्याप्रामाण्यनिर्वाहः ।

अथास्त्वेतत्कल्पे व्याप्यत्वनिवेशसार्थक्यं परन्तु सर्व्वं प्रमेयमित्यादिरूपे उद्देश्यवाचकपदान्तरशून्ये स्थितस्य सर्व्वपदस्य सामान्यतोभेदप्रतियोगितानवच्छेदिका विधेयव्याप्या या पर्य्याप्तिस्तत्प्रतियोगिधर्म्मावच्छिन्ने शक्तिनिर्व्वचनं गौरवग्रस्तं, सामान्यतो भेदप्रतियोगितानवच्छेदकविधेयतावच्छेदकावच्छिन्नसमानाधिकरणपर्य्याप्तिनिवेशेनैव सामञ्जस्यसम्भवादितिचेन्न, सर्व्वं प्रमेयमितिवाक्यजन्यशाब्दात्मकविशेषणतावच्छेदकप्रकारकज्ञानादभ्रान्तानामन्तरा सधर्म्मितावच्छेदककस्य सर्व्वं प्रमेयवानित्याकारकविशिष्टवैशिष्ट्यबोधानुदयानुरोधेन गुरुतराया अपि गदाधरोक्तशक्तेः स्वीकारावश्यकत्वात् । अन्यथा वस्तुत्रयादिमात्रगतयावत्त्वस्य निरुक्तसामानाधिकरण्येन प्राप्ततया तदवच्छिन्नाधिकरणत्वस्य सुप्रसिद्धतयाचाभ्रान्तानामुक्तविशिष्टवैशिष्ट्यबोधोदुर्व्वारः स्यात् । नचविधेयसमानाधिकरणभेदप्रतियोगितानवच्छेदकपर्य्याप्तिकधर्म्मावच्छिन्न एव शक्तिरास्तां किमुक्त-

व्याप्यत्वनिवेशेनेति वाच्यं, तथा सति सर्व्वं प्रमेयमिति-
वत् सर्व्वाणि रूपवन्तीत्यादेः प्रामाण्यापत्तेर्निरुक्तयावत्त्वाश्र-
ये घटादौ रूपादेरभावात्। अथ सर्व्वं प्रमेयमित्यादिवा-
क्यजन्यशाब्दात्मकधर्म्मितावच्छेदकप्रकारकज्ञानात् तादृश-
धर्म्मावच्छिन्नविशेष्यकं सर्व्वं प्रमेयं तद्रूपवदित्याकारकं प्रत्य-
क्षं स्यात्, द्वावयमित्याकारकप्रत्यक्षस्येव तस्येष्टापत्तेरयो-
गादितिचेन्न। शाब्दान्वयबोधे धर्म्मितावच्छेदकीभूतयावत्त्व-
घटितधर्म्मावच्छिन्नत्वघटितसम्बन्धावच्छिन्नप्रकारत्वस्यैवाभ्यु-
पगमादभावलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकावच्छिन्नप्र-
तियोगितासम्बन्धावच्छिन्नप्रकारताकत्वनियमवत्। अथ स-
र्व्वत्वधर्म्मावच्छिन्ने प्रकारताशालिज्ञानमात्र एवावच्छेदावच्-
छेदेन प्रकारत्वनियममुपगम्य सर्व्वपदघटितसकलवाक्याना-
मेव चरितार्थत्वसम्भवेन शक्तिशरीरे व्याप्यत्वनिवेशकृतगौरवं
दोषास्पदमेवेतिचेन्न, यतोऽवच्छेदावच्छेदेन तात्पर्य्यग्रहद-
शायामपि सर्व्वं रूपवदित्यादिभ्रमोत्पादस्यानुभवसिद्धतया
तज्ज्ञाने भ्रमत्वनिर्व्वाहार्थं शक्तिशरीरे गुर्व्वपि व्याप्यत्वम-
वश्यं निवेशनीयं फलमुखगौरवस्यादोषत्वादित्येव गदाध-
रग्रन्थाभिप्रायः। अपिच यथा घटत्वव्यापकपर्य्याप्तौ प्रमेय-
त्वव्याप्यत्वग्रहे घटः प्रमेयत्वाभाववानित्याकारकज्ञानं न जा-
यते तथा सामान्यतो भेदप्रतियोगितानवच्छेदकत्वेन गृ-
हीतपर्य्याप्तौ प्रमेयत्वव्याप्यत्वग्रहेऽपि। एवञ्च तत्र व्याप्य-
त्वमनिवेश्य तादृशपर्य्याप्तिप्रतियोगिधर्म्मावच्छेदेनान्वयबोध-
स्वीकारे तादृशान्वयबोधे निरुक्तप्रतिबन्धकानुपपत्तिर्बोध्या।
वस्तुतस्तु, इदन्त्वावच्छिन्नविशेष्यकद्वित्वावच्छिन्नविधेयकशा-
ब्दस्य द्वित्वावच्छिन्नविशेष्यकेदन्त्वावच्छिन्नविधेयकशाब्दस्य च
यथा भ्रमत्वं नितरामेवायंद्वौ द्वावयमितिवाक्ययोरप्रामा-

ण्यं, तथा घटः सर्व्वः सर्व्वो घट इति वाक्ययोरप्रामाण्यं तज्जन्यशाब्दयोर्भ्रमत्वंच सर्व्वानुमतमेव, प्रामाण्यं प्रमात्वञ्च सर्व्वं प्रमेयं प्रमेयञ्च सर्व्वमितिवाक्ययो स्तज्जन्यशाब्दयोश्च, एवंच सर्व्वोद्देश्यकप्रमेयविधेयकवोध प्रमेयोद्देश्यकसर्व्वविधेयकशाब्दवोधयोर्निर्व्वाहार्थं लाघवेन केवलान्वयिसर्व्वत्वावच्छिन्नस्यैकैवशक्तिः स्वीकार्य्येति, तत्र विधेयव्याप्यपदं स्वार्थान्वयिव्याप्यपरमन्वयित्वं च विधेयविधया विशेष्यविधयेत्युभयरूपमेव। तथाच भेदप्रतियोगितानवच्छेदकस्वार्थान्वयितावच्छेदकावच्छिन्नव्याप्यपर्य्याप्तिक-धर्म्मावच्छिन्ने केवलान्वयिसर्व्वपदार्थस्यैका शक्तिः पर्य्यवसिता। अत्रच निरुक्तव्याप्यत्वमनिवेश्य सर्व्वत्वस्यावच्छेदावच्छेदेनान्वयमभ्युपगम्योपपत्तिर्न सम्भवति, तथासति सर्व्वत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नविधेयकप्रमावारणेऽपि घटत्वावच्छिन्नविशेष्यकसर्व्वत्वावच्छिन्नविधेयकशाब्दबोधस्यप्रमात्वापत्तेः कथमपि वारणासम्भवाद् घटत्वावच्छेदेन सर्व्वत्वस्य सत्त्वादित्यास्तां विस्तरः।

अथ स्वार्थान्वयितावच्छेदकव्यापक स्वार्थान्वयितावच्छेदकावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्यपर्य्याप्तिकत्वादिकल्पे व्यभिचाररूपसम्बन्धघटकप्रतियोगित्वं केन सम्बन्धेन वक्तव्यं, यत्सम्बन्ध प्रवेशे सर्व्वे घटा रूपवन्तः सर्व्वेषु घटेषु रूपाणि सर्व्वे धर्म्माः काले कालः सर्व्वधर्म्मवानित्यादि सर्व्वेषां संग्रहो भवेत्, नतावत् स्वार्थान्वयितावच्छेदकावच्छिन्नान्वयितावच्छेदकसम्बन्धेन, तथा सति सर्व्वेषु घटेषु रूपाणि कालः सर्व्वधर्म्मवानित्यादेरसंग्रहः स्यात्, मुख्यविशेष्यविधया भासमानरूपकालनिष्ठचरमान्वयितायाः सम्बन्धानवच्छिन्नत्वादितिचेन्न। स्वार्थान्वयितावच्छेदकावच्छिन्नस्वता-

त्पर्य्यविषयान्वयितावििशिष्टं यदवच्छेदकत्वं वैशिष्ट्यं च स्व-
निष्ठा या विशिष्टबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रति-
बन्धकतावच्छेदकता तद्वत्त्वसम्बन्धेन तद्वत्त्वं च स्वनिरूपितत्व-
स्वाश्रयविषयतानिरूपितविषयतानिष्ठत्वोभयसम्बन्धेन, एव-
म्भूतं निरुक्तान्वयितावििशिष्टं निरुक्तप्रतिबन्धकतावच्छेदकता-
वच्छेदकत्वं पर्य्यवसितम्। ईदृशी च विषयता सर्व्वे धर्म्माः
काले इत्यादावाधेयत्वसम्बन्धावच्छिन्नकालनिष्ठप्रकारता का-
लः सर्व्वधर्म्मवानित्यादौ च तन्निष्ठमुख्यविशेष्यता। स-
र्व्वे घटा रूपवन्त इत्यादिस्थलेतु समवायसम्बन्धावच्छि-
न्नरूपनिष्ठप्रकारता, मतुपः प्रकृतेरर्थस्य नामार्थे भेदान्व-
योपगमात्। सर्व्वेषु घटेषु रूपाणीत्यादौचाधेयत्वस-
म्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितरूपत्वाव-
च्छिन्नमुख्यविशेष्यतेवेति, विभक्तिप्रकृत्यर्थस्य नामार्थे भे-
दान्वयस्य नव्यसम्मतत्वात्। एवम्भूतं यन्निरुक्तान्वयिताविि-
शिष्टमवच्छेदकत्वं तन्निरूपितमभावनिष्टं यदवच्छेदकत्वं
तन्निरूपितमवच्छिन्नत्वनिष्ठं यदवच्छेदकत्वं तन्निरूपितं
भेदधर्म्मिनिष्टं यदवच्छेदकत्वं तन्निरूपितं भेदनिष्टं यदव-
च्छेदकत्वं तन्निरूपितं प्रतियोगित्वसम्बन्धावच्छिन्नं यद-
वच्छेदकत्वमीदृशावच्छेदकतापर्य्याप्त्युपलक्षितसम्बन्धेन
शक्तिशरीरे व्यभिचारसम्बन्धप्रतियोगित्वस्यानुगतस्य निवेशा-
त्। अयमाशयः, घटोरूपसामान्याभाववान् कालो धर्म्मा-
भाववानित्यादिविशिष्टबुद्धौ समवायेन घटो रूपवान् घटे
रूपं कालिकसम्बन्धेन कालो धर्म्मवान् काले धर्म्म इत्यादि-
द्विविधनिश्चय एव प्रतिबन्धको भवति, तादृशप्रतिबन्धक-
ताच तादृशद्विविधनिश्चयसाधारण्येनैव लाघवात्, नतु स-
मवायादितत्सम्बन्धावच्छिन्नाधेयत्वरूपसंसर्गवैलक्षण्येन ता-

द्वैविध्यं गौरवात् । रीतिस्तु समवायसम्बन्धाद्यतिरिक्त-
सम्बन्धानवच्छिन्नरूपत्वाद्यवच्छिन्नविषयतानिरूपितसम-
वायसम्बन्धाद्यवच्छिन्नाधेयत्वातिरिक्तसम्बन्धानवच्छिन्नघ-
टत्वाद्यवच्छिन्नविषयताशालिनिश्चयत्वेनैकविधं, कालिक-
सम्बन्धाद्यवच्छिन्नाधेयत्वातिरिक्तसम्बन्धानवच्छिन्नकाल-
त्वावच्छिन्नविषयतानिरूपितकालिकसम्बन्धाद्यतिरिक्तसम्ब-
न्धानवच्छिन्नधर्म्मत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैकवि-
धञ्च प्रतिबन्धकत्वम् । एवञ्च सर्व्वे घटा रूपवन्तः सर्-
व्वेषु घटेषु रूपाणीत्यादौ समवायसम्बन्ध एव निरुक्तानुग-
मकधर्म्मेणालभ्यते, कालः सर्व्वधर्म्मवान् काले सर्व्वे धर्म्मा
इत्यादौ च कालिकसम्बन्धावच्छिन्नाधेयत्वसम्बन्ध एवेति
सर्व्वं च शक्तेरैक्यं सुवचम् । अनुगमशरीरेऽन्वयितायां स्वपद-
तात्पर्य्यविषयत्वानिवेशे कालिकसम्बन्धतत्सम्बन्धावच्छिन्नाधे-
यत्वयोरपि सर्व्वे घटाः कालिकेन नीलवन्तः सर्व्वे नीलगुणाः
कालिकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन घटवन्त इत्यादिप्र-
माणवाक्यस्थले कदाचिन्निरुक्तानुगतरूपेण तादृशसम्बन्धयो-
रपि प्राप्ततया तौ सम्बन्धावादाय सर्व्वे घटाः समवायेन
नीलवन्तः सर्व्वे नीलगुणाः समवायसम्बन्धावच्छिन्नाधेय-
तासम्बन्धेन घटवन्त इत्यादिवाक्यानां प्रामाण्यापत्तिर्दुर्वा-
रैवानुगमशरीरेऽन्यत् सर्व्वं सुधीभिरनुसन्धेयम् ।

वस्तुतस्तु, शक्त्यनुगमशरीरे उद्देश्यत्वविधेयत्वयोः प्र-
वेशकल्पेऽपि सर्व्वे घटा रूपवन्त इत्याकारकशाब्दनिश्चयो-
त्तरं रूपवत्सर्व्वं घटवानित्याद्याकारकप्रत्यक्षादेः प्रमात्वं
स्याद् यदि विधेयव्याप्यत्वनिवेशो नस्यात्, अन्तरासधर्म्मिता-
वच्छेदकविशिष्टवैशिष्ट्यबोधकारणीभूतशाब्दात्मकनिश्चय-
विषयत्वेन घटत्वादिगतयावत्त्वस्यापि अवगते प्राप्ततया

तादृशयावत्त्वावच्छिन्नाधिकरणतायाश्च भूतलादाववाधित-
तयाच तदवच्छिन्नवति तदवच्छिन्नप्रकारकत्वरूपप्रमात्व-
स्य तादृशप्रत्यक्षादावक्षतेः। अस्माकन्तु निरुक्तवाक्येन नि-
खिलघटगतसर्व्वत्वस्यैवावगमिततया तदवच्छिन्नाधिकर-
णताया अलीकत्वेनोक्तापत्तेरयोगः।

अथ स्वसमनियतधर्म्मपर्य्याप्तावच्छेदकताकानुयोगि-
ताकपर्य्याप्तेरेव सर्व्वत्वस्य संसर्गतया भाननियमादुद्देश्य-
तावच्छेदके स्वार्थान्वयितावच्छेदके वा पर्य्याप्तावच्छेदक-
ताकानुयोगिताकत्वेन शक्यतावच्छेदकघटकपर्य्याप्तेर्लाघ-
वतो निवेश आस्तां, नतु धर्म्मितावच्छेदकव्यापकत्वरूप-
गुरुधर्म्मेण तस्या इति चेन्न, अन्वयितावच्छेदकघटकसक-
लधर्म्मान्तर्भावेण पर्य्याप्त्यनुयोगितावच्छेदकताया अप्रामा-
णिकत्वस्यावच्छेदकत्वनिरुक्तिविचारप्रकरणे व्यवस्थापित-
त्वात्। अपिच तुष्यत्विति न्यायेन तत्प्रामाणिकत्वमभ्युप-
गम्याप्युक्त तन्निवेशो नहि सम्भवति, यतो घटत्वसामाना-
धिकरण्येन रूपाभाववत्ताबुद्धिं प्रत्यपि सर्व्वे घटारूपव-
न्त इति निश्चयस्य प्रतिबन्धोपयोगित्वं सर्व्वानुमतमेव, तच्च
तदैव निर्व्वहति यदि सर्व्वे घटा रूपवन्त इति निश्चये रू-
पवति घटत्वव्यापकत्वनिश्चयमर्ज्जयेत्, तादृशव्यापकत्वनि-
श्चयस्य निरुक्तसामानाधिकरण्येन बुद्धिं प्रति साक्षादेव प्र-
तिबन्धकत्वात्। एवञ्चोक्तसामानाधिकरण्येन बुद्धिं प्रति
साक्षात् प्रतिबन्धकस्य निरुक्तनिश्चयस्य नियमतः सम्पाद-
नार्थं सर्व्वे घटा रूपवन्त इत्यादिवाक्याद् रूपवद्विशेष्य-
कघटत्वव्यापकव्यापकत्वनिश्चय पर्य्यवसितघटत्वव्यापकरूपव-
द्व्याप्यपर्य्याप्तिविषयकशाब्दस्य जननावश्यकत्वानुरोधेन नि-
रुक्तगुरुतरधर्म्मे सर्व्वपदशक्यतावच्छेदकघटकत्वावश्यकत्वा-

त्। तत्तद्धर्म्मव्यापकव्यापकत्ववति तत्तद्धर्म्मव्यापकत्वनियमे-नच ताद्दशवाक्यजन्यबोधानन्तरमेव भवत्यर्थवशसम्पन्नो नि-रुक्तप्रतिबन्धकीभूतो विपरीतनिश्चयो नत्वन्यथेति गदाधरग्र-न्थतात्पर्य्यम्।

इदमत्रावधेयम्, घटीनरूपवानित्यादिबुद्धिं प्रति प्र-तिबन्धोपयोगितया निरुक्तयुक्त्या संस्थापनेऽपि घटीन रूप-वानितिनिश्चयोत्तरं सर्व्वे घटा रूपवन्त इतिवाक्यजन्यशा-ब्दबोधो दुर्व्वारएव, अत एकदेशव्यापकत्वघटितसम्बन्धेनाप्य-वच्छेदावच्छेदेन बुद्धिमङ्गीकुर्व्वतामाचार्य्यप्रभृतीनां मत-माश्रित्य पूर्व्वोपदर्शितरीत्या सर्व्वपदशक्यतावच्छेदकनि-र्व्वचनमेव साधीयः। केचित्तु, अनुभवानुरोधेन रूपवद्-विशिष्टघटत्वव्यापकव्यापकत्वनिश्चय घटत्वावच्छिन्नविशिष्ट-करूपाभावप्रकारकनिश्चययोः परस्परं साक्षादेव प्रतिबध्य-प्रतिबन्धकभावो मणिमन्त्रादिन्यायेन कल्प्यत इति न कि-ञ्चिदनुपपन्नमित्याहु स्तच्चिन्त्यम्, मणिमन्त्रादिन्यायेन प्रतिब-न्धकत्वस्वीकारे एकदेशव्यापकत्वघटितसंसर्गताया अस्वीका-रेऽपि सर्व्वत्वघटत्वे तदुभयव्यापकत्वघटितसम्बन्धेन रूपव-त्तानिश्चयस्यापि मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वं प्रकल्प्या-प्यनुभवनिर्व्वाहेण शक्यतावच्छेदकशरीरे साध्यव्याप्यत्वनिवे-शस्यानावश्यकगौरवदोषकवलितत्वापत्ते रित्यास्तां विस्तरः॥

अद्वेषादृदृश्यतामेष नीतिज्ञैः स्वप्रणीतवत्।
ईदृगदृष्ट्येह दोषश्चेत् स मे शिरसि नृत्यतु॥

श्रीराखालदासन्यायरत्नस्य
प्रार्थनेयम्॥



